साधारणेन्तरत्वेच द्विश्रुतिर्विकृतस्तदा ।
पञ्चमो मध्यमग्रामे त्रिश्रुतिर्जायतेस्वरः ॥ ६० ॥
मध्यमस्य श्रुतिं प्राप्य कैशिकोपि चतुःश्रुतिः ।
धैवतो मध्यमग्रामे विकृतः स्याच्चतुःश्रुतिः ॥ ६१ ॥
कैशिके काकलीत्वे च निषादस्त्रिचतुःश्रुतिः ।
एते च सप्तभिः शुद्धैः भवन्त्येकोनत्रिंशतिः ॥ तथा च रत्नाकरः ॥

(54—62) The 7 Suddha swaras and 12 Vikrita swaras as formulated in Sangita Ratnakara.

(சு. 54—62) சங்கீத ரத்னகரத்தில் சொல்லியிருக்கிறபடி 7 சுத்த ஸ்வரங்களும், 12 விக்ருத ஸ்வரங்களும்.

चतुर्विधाः स्वरा वादी संवादी च विवाद्यपि ।
अनुवादी च वादीतु प्रयोगे बहुलःस्वरः ॥ ६३ ॥
वाद्यादिभेदभिन्नाश्चतुर्विधास्ते स्वराः कथिताः ।
रागोत्पादनशक्तिर्वादनं तद्योगतोवादी ॥ ६४ ॥
बहुलस्वरः प्रयोगे सभवति राजा च सर्वेषाम् ।
श्रुतयोष्टौ द्वादशवा भवन्तिमध्ये ययोः स्वरयोः ॥ ६५ ॥
संवादिनौ तुकथितौ परस्परं तौ निषादगान्धारौ ।
रिधयो र्विवादिनौस्तः तयोरिधौवा विवादिनौस्याताम् ॥ ६६ ॥
शेषाणामनुवादित्वं स्वराणामुपजायते ।
वादी राजा स्वरस्तस्य संवादी स्यादमात्यवत् ।
शत्रुर्विवादी तस्यस्यात् अनुवादीतुभृत्यवत् ॥ ६७ ॥

इति वाद्यादिभेदाः ।

63—67 Vadi, Samvadi (consonant) Anuvadi (assonant) & Vivadi (dissnoant)Swaras,-a classification necessary in the formation of Ragas.

(சு. 63—67) ராகங்களை அமைப்பதற்கு வேண்டிய ஸ்வரங்களின் வகை:—

வாதி (முக்கிய ஸ்வரம்), ஸம்வாதி (கிளை ஸ்வரம்), விவாதி (பகை ஸ்வரம்), அனுவாதி (நட்பு ஸ்வரம்),

ग्रामः स्वरसमूहःस्यात् मूर्छनादेःसमाश्रयः ।
तौद्वौधरातले तत्र स्यात्षड्जग्राम आदिमः ॥ ६८ ॥

द्वितीयो मध्यमग्रामस्तयोर्लक्षणमुच्यते ।
षड्जग्रामः पञ्चमेस्वचतुर्थश्रुतिसंस्थिते ॥ ६९ ॥

स्वोपान्त्यश्रुतिसंस्थेस्मिन् मध्यमग्रामइष्यते ।
यद्वाधस्त्रिश्रुतिः षडजे मध्यमे च चतुःश्रुतिः ॥ ७० ॥

रिमयोः श्रुतिमेकैकां गान्धारश्च समाश्रयेत् ।
पश्रुतिंधोनिषादस्तु धश्रुतिं सश्रुतिंश्रितः ॥ ७१ ॥

गान्धारग्राममाचष्ट तदातं नारदोमुनिः ।
प्रवर्तते स्वर्गलोके ग्रामोसौ नमहीतले ॥ ७२ ॥

षड्जःप्रधान आद्यत्वादमात्याधिक्यतस्तथा ।
ग्रामेस्यादविलोपित्वात् मध्यमस्तुपुरस्सरः ।
एतत्कुलप्रसूतत्वात् गान्धारोप्यग्रणीर्दिवि ॥ ७३ ॥

68—73 The 3 Gramas and their characteristics.

(சு. 68—73) 3 க்ராமங்கள் என்னும் ஸ்வரத் தொகுதிகளும் அவற்றின் லக்ஷணங்களும்.

गीर्वाण कुलसम्भूताः षड्जगान्धारमध्यमाः ।
पञ्चमः पितृवंशोत्थो रिधवृषि कुलोद्भवौ ॥ ७४ ॥

निषादोऽसुरवंशोत्थो ब्राह्मणाः समपञ्चमाः ।
रिधौतुक्षत्रियौज्ञेयौ वैश्यजाती निगौ मतौ ।

शूद्रावन्तरकाकल्पौ क्रमेण कथिता बुधैः ७५ ॥

(74—75) The tribe and caste of swras.

(சு. 74—75) ஸ்வரங்களின் குலமும் ஜாதியும்

इति ग्रामलक्षणम् ।

क्रमात्स्वराणां सप्तानां आरोहश्चावरोहणम् ।
मूर्छनेत्युच्यतेग्रामत्रये ताः सप्त सप्त च ॥ ७६ ॥

स्थानत्रयसमायोगे मूर्छनारम्भसम्भवः ।
तत्र मध्यस्थषड्जेन षड्जग्रामस्य मूर्छना ॥ ७७ ॥

प्रथमारभ्यतेन्यास्तु निषादाद्यैरधस्तनैः ।
मध्यमध्यममारभ्य मध्यमग्राममूर्छना ॥ ७८ ॥

आद्यान्यास्तदधोधस्थ स्वरानारभ्यषट्क्रमात् ।
षड्जेतूत्तरमन्द्राख्या रजनीचोत्तरायता ॥ ७९ ॥

शुद्धषड्जामत्सरीकृदश्वक्रान्ताभिरुद्गता ।
सौवीरीमध्यमग्रामे हारिणाश्वाततःपरा ॥ ८० ॥

स्यात्कलोपनता शुद्धमध्यामार्गी च पौरवी ।
हृष्यका सप्तमी प्रोक्ता मूर्छनेत्यभिधाइमाः ॥ ८१ ॥

नन्दा विशाला सुमुखी विचित्रारोहिणी सुखा ।
आलापाचेतिगान्धारग्रामेस्युः सप्तमूर्छनाः ॥ ८२ ॥

ताश्च स्वर्गे प्रयोक्तव्या विशेषादत्रनोदिताः ।
पृथक् चतुर्विधाः शुद्धाः काकलीकलितास्तथा ।

सान्तारास्तद्द्वयोपेता: षट्पंचाशत्तुमूर्छना: ॥ ८३ ॥

(76—83) Moorchhanas (modes) fore each grama. 28 in number. made up of 7 Suddha, 7 with Kakali, 7 with antara and 7 with both.—56 for both the gramas.

(சு. 76—83) மூர்ச்சனைகள், ஒவ்வொரு கிராமத்திற்கும் சுத்த மூர்ச்சனைகள் 7, அந்தர ஸ்வரத்தோடு கூடியது 7, காகலி ஸ்வரத்தோடு கூடியது 7, இரண்டும் கூடியது 7, ஆக இரண்டு கிராமங்களுக்கும் 56.

यदानिषादसंज्ञक: श्रुतिद्वयं समाश्रयेत् ।
तदूर्ध्वसस्य काकलीतदा सकीर्त्यते बुधै: ॥ ८४ ॥
यदाश्रयतिगान्धारो मध्यमस्य श्रुतिद्वयम् ।
तदासावन्तर: प्रोक्त: मुनिभीऋतुसन्धिवत् ॥ ८५ ॥

(84—85) 'Kakali' and 'Antara' defined.

(சு. 84—85) 'காகலி' 'அந்தரம்' என்ற ஸ்வரங்களின் லக்ஷணம்.

मूर्छनायां यावतिथौ भवेतां षड्जमध्यमौ ।
ग्रामयोस्तावतिथ्येव मूर्छना सा प्रकीर्तिता ॥ ८६ ॥

(86) Order of Moorchhnas.

(சு. 86) மூர்ச்சனைகளின் வரிசை.

प्रथमादिस्वरारम्भा देकैका सप्तधाभवेत् ।
तासूच्चार्यान्त्यस्वरांस्तान् पूर्वानुच्चारयेत्क्रमात् ।
ते क्रमा: कथितास्तेषां सङ्ख्यानेकतरामता ॥ ८७ ॥

(87) Kramas, 7 for each moorchhana

(சு. 87) கிரமங்கள், ஒவ்வொரு மூர்ச்சனைக்கும் 7.

यदातु मूर्छना: शुद्धा: षाडवौडवितीकृता: ।
तदातु शुद्धताना:स्यु: मूर्छनास्तत्र षड्जगा: ॥ ८८ ॥

सप्तक्रमाद्यदाहीनाः स्वरैः सरिपसप्तमैः ।
तदाष्टाविंशति स्तानाःषाडवाः परिकीर्तिताः ॥ ८९ ॥

यदातुमध्यमग्रामे मूर्छनाः सरिगोज्झिताः ।
सप्तक्रमाद्यदातानाः स्युस्तदात्वेकविंशतिः ॥ ९० ॥

एवमेकोनपञ्चाशन्मिलिताः षाडवा मताः ।
सपाभ्यां द्विश्रुतिभ्यांच रिपाभ्यां सप्तवर्जिताः ॥ ९१ ॥

षड्जग्रामे पृथक् ताना एकविंशतिरौडवाः ।
त्रिश्रुतिभ्यां द्विश्रुतिभ्यां मध्यमग्राममूर्छनाः ॥ ९२ ॥

यदाहीनास्तदातानाः चतुर्दश समीरिताः ।
औडवामिलिताः पञ्च त्रिंशद्ग्रामद्वयेस्थिताः ।
सर्वे चतुरशीतिःस्युः मिलिताः षाडवौडवाः ॥ ९३ ॥

इति शुद्धतान विवेकः ॥

(88—93) Suddha Tanas, 84 in number.
(சு. 88—93) சுத்த தானங்கள் 84.

असम्पूर्णाश्चसंपूर्णाव्युत्क्रमोच्चारिताः स्वराः ।
मूर्छनाः कूटतानाःस्युः तासां सङ्ख्याभिधीयते ॥ ९४ ॥

पूर्णाः पञ्चसहस्राणि चत्वारिंशद्युतानि च ।
एकैकस्यां मूर्छनायां कूटतानास्सह क्रमैः ॥ ९५ ॥
षट्पञ्चाशन्मूर्छनाःस्युः पूर्णाः कूटास्तु योजिताः ।
लक्षद्वयं सहस्राणि द्व्यशीतिर्द्विशते तथा ॥ ९६ ॥

चत्वारिंशच्च संख्याताः अथापूर्णान्प्रचक्ष्महे ।
एकैकान्त्यान्त्यविरहाभेदाः षट् षट्स्वरादयः ॥ ९७ ॥

एकस्वरोत्र निर्भेदोप्युक्तो नष्टादिसिद्धये ।
क्रमाश्चकूटतानत्वेप्युक्तास्तेप्युपयोगिनः ॥ ९८ ॥

स्युः षाडवानां विंशत्या सह सप्तशतानि च ।
औडवानान्तु विंशत्या सहितं शतमुच्यते ॥ ९९ ॥

चतुःस्वराणां कूटानां चतुर्विंशतिरीरिताः ।
त्रिस्वराःषट् द्विस्वरौद्वौ एक एकस्वरोमतः ॥ १०० ॥

आर्चिकोगाथिकश्चैव सामिकोथ स्वरान्तरः ।
एकस्वरादितानानां चतुर्णामभिधाइमाः ॥ १०१ ॥

उक्तशुद्धादिभेदेन निगयुक्ताश्चतुर्विधाः ।
तयोरेकैकहीनास्तु द्वेधामूलक्रमामताः ॥ १०२ ॥

षड्जाद्यौ मध्यमाद्यौ द्वौ चत्वारःस्युर्द्विधा द्विधा ।
चतुर्धान्ये दशेत्यष्टाचत्वारिंश दमीक्रमाः ॥ १०३ ॥

सविंशतिस्सप्तशती प्रागुक्तागुणिता क्रमैः ।
चतुस्त्रिंशत्सहस्राणि षष्टचापञ्चशतानि च ॥ १०४ ॥

इति षाडवसंख्यास्यादथ पञ्चस्वरान्ब्रुवे ।
गाद्यौ धाद्यौ निषादाद्यौ चतुर्भेदाः षडौडवाः ॥ १०५ ॥

अष्टावन्ये द्विधात्वेवं चत्वारिंशदिमे क्रमाः ।
सविंशतौ शतेतैश्च गुणितेऽष्टौ शतानिच ॥ १०६ ॥

चत्वारिच सहस्राणि संख्या पञ्चस्वरेष्विति ।
चतुःस्वरेषु न्याद्यौ द्वौ चतुर्धा द्वादशापरे ॥ १०७ ॥

क्रमाद्द्विधेति द्वात्रिंशच्चतुर्विंशतिताडिताः ।
शतानि सप्ताष्टषष्ट्या चतुःस्वरसुसंमितिः ॥ १०८ ॥

त्रिस्वरेषु तु माद्यौ द्वावमे ह्यौ द्वादशापरे ।
द्विधा षड्विंशतिरिति क्रमास्ते षड्भिराहताः ॥ १०९ ॥

षट्पञ्चाशच्छतंचस्युः द्विस्वरेषु पुनर्द्विधा ।
रिगधन्यादयोष्टौस्युः शुद्धाः षडितरे क्रमाः ॥ ११० ॥

द्वाविंशतिस्तेच चतुश्चत्वारिंशद्द्विताडिताः ।
एकस्वरास्त्वभेदत्वान्मौला एव चतुर्दश ॥ १११ ॥

षड्जादेः शुद्धमध्यायाः भेदकं पञ्चमं विना ।
चतुः स्वरे क्रमद्वंद्वेऽष्टाचत्वारिंशदीरिताः ॥ ११२ ॥

तानास्त्रिस्वरयोस्त्वेते द्वादश द्विस्वरे द्वयम् ।
एक एकस्वरस्तेत्रिषष्टि रौत्तरमन्द्रकैः ॥ ११३ ॥

पुनरुक्तामतास्ताना न्यादि मार्गी क्रमात्पुनः ।
पञ्च स्वराये चत्वारः तत्तानानां चतुःशती ॥ ११४ ॥

अशीत्यभ्यधिका चातुस्वरी षण्णवतिर्भवेत् ।
द्वादश त्रिस्वरद्वंद्वे चत्वारो द्विस्वरद्वये ॥ ११५ ॥

एक एकस्वरस्तानः तेषां पञ्चशतीत्वियम् ।
त्रिनवत्यायुतातानैः अभिन्नारजनीगतैः ॥ ११६ ॥

धैवतादेस्तु पौर्व्याश्चत्वारः षट्स्वराः क्रमात् ।
तत्तानानान्तु साशीतिशताष्टाविंशतिर्मता ॥ ११७ ॥
औडवानां चतुर्णां प्रागुक्ता संख्या चतुःस्वरौ ।
त्रिस्वरौद्विस्वरावेकस्वरः प्रागुक्त संख्यकाः ॥ ११८ ॥
पञ्चविंशति संयुक्ता चतुस्त्रिंशच्छतीत्वियम् ।
तानानां सदृशाकारा स्यात्तानै रौत्तरायतैः ॥ ११९ ॥
इत्येकाशीतिसंयुक्तं सहस्राणां चतुष्टयम् ।
तानानां पुनरुक्तानां पूर्णापूर्णैः सह क्रमैः ॥ १२० ॥
अपनीयेतचेदेषाकूटतानमितिर्भवेत् ।
लक्षत्रयं सप्तदश सहस्राणि शतानि च ।
नवत्रिंशद्युतानीति कूटतानमितिर्भवेत् ॥ १२१ ॥

इति कूटतान प्रकरणम् ।

(93—121) Koota tanas, (ie) tanas formed by notes arranged out of order, and their total number arrived at by calculation.

(சு. 93—121) கூடதானங்களும் (வரிசை மாறிய ஸ்வரங்களால் உண்டானவை) அவைகளின் மொத்தத் தொகையின் கணக்கும்.

संख्याज्ञान प्रकारस्तु सांप्रतंकथयिष्यते ।
अङ्कानेकादि सप्तान्तानूर्ध्वमूर्ध्वं लिखेत्ततः ॥ १२२ ॥
हते पूर्वेण पूर्वेण तेषुचाङ्के परे परे ।
एकस्वरादितानानां संख्या सञ्जायते क्रमात् ॥ १२३ ॥
द्विस्वरं त्रिस्वरं वापि चतुःस्वरमथापिवा ।
क्रमं कंचिद्विलिख्यादौ पूर्वः पूर्वः परादधः ॥ १२४ ॥

स्वरः स्थाप्यः सचेदग्रे तत्पूर्वस्तदधोभवेत् ।
पुरतोऽपि लिखेद्धीमान् स्वरानुपश्चिवर्तिनः ।
मूलक्रमःक्रमात्पृष्ठे शेषः प्रस्तारईदृशः ॥ १२५ ॥

(122—125) Sankhya or the table of prastara or orderly formulation of the permutation and combination of swaras in tanas.

(சு. 122—125) 'சங்கியை' அல்லது வரிசையாகத் தானங்களை ப்ரஸ்தாரம் செய்யும் வழி.

नष्टोद्दिष्टप्रबोधार्थं खण्डमेरुस्तथोच्यते ।
सप्तकौष्ठानलिखेदाद्यां पङ्क्तिमेकाङ्क कोष्ठतः ॥ १२६ ॥

हीनं तु पूर्वं पूर्वस्मात् पङ्क्तिषट्कमधो लिखेत् ।
आद्यपङ्क्त्यादि कोष्ठेतु लिखेदेकं परेषुखम् ॥ १२७ ॥

द्वितीयपङ्क्त्यामप्येकं आद्यकोष्ठे लिखेद्बुधः ।
परेषु पूर्वपूर्वाङ्ककोष्टसंख्यागुणं न्यसेत् ॥ १२८ ॥

एवमेवलिखेदङ्कमधोधः पङ्क्तिकोष्ठकम् ।
खण्डमेरुरयं प्रोक्तः नष्टोद्दिष्टप्रबोधकः ॥ १२९ ॥

वेद्यतानस्वरमितान् दत्वा शून्येषु लोष्टकान् ।
मूलक्रमं लिखित्वादौ उद्दिष्टं तदधोलिखेत् ॥ १३० ॥

स्वरान्मूलक्रमस्यान्त्यात् पूर्वोयावतिथः स्वरः ।
उद्दिष्टान्त्यस्तावतिथे कोष्ठाधो लोष्टकं क्षिपेत् ॥ १३१ ॥

लोष्टचालनमन्त्यात्स्या लब्धंत्यक्त्वा क्रमोभवेत् ।
समश्चेदन्तिमोऽन्येन सोपित्याज्यः प्रयत्नतः ॥ १३२ ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० |
| | १ | २ | ६ | १४ | १२७ | ७२० |
| | | ४ | १२ | ४८ | २४० | १८०० |
| | | | १८ | ७२ | ३९० | २१६० |
| | | | | ९६ | ४८० | २८८० |
| | | | | | ६०० | ३६०० |
| | | | | | | ४३२० |

लोष्टकान्तांकसंयोगात् उद्दिष्टस्यमितिर्भवेत् ।
सङ्ख्यायातु यदारूपे पृष्टे नष्टन्तदुच्यते ॥ १३३ ॥
यैरङ्कैर्नष्टसङ्ख्यास्यात् मौलैकाङ्कसमन्वित: ।
नष्टतानस्वरस्थानं तैर्ज्ञात्वा तं स्वरं लिखेत् ॥ १३४ ॥
क्रमोऽत्रापि च कर्तव्य: लब्ध्वात्यागेन पूर्ववत् ।
तथैवात्रलिखेच्छिष्टमेवं नष्टोत्तरं भवेत् ॥ १३५ ॥
तानस्वरोमतोर्ध्वाध: पङ्क्तिगान्त्यांकमिश्रणात् ।
एकस्वरादितानानां सङ्ख्यासंजायते स्फुटम् ॥ १३६ ॥
इति खण्डमेरु नष्टोद्दिष्ट प्रकरणम् । अथ साधारणम् ।

126—136 Khanda meru or the table for ' Uddishta. or finding the order of any particular tana, and for 'Nashta' or finding the form of a tana of a particular order

(சு. 126-136) 'கண்டமேரு' - அல்லது 'நஷ்டம்' 'உத்திஷ்டம்' என்பவைகளுக்கான வழி. அதாவது தானம் எத்தனையாவது என்று சொல்லி அதன் உருவத்தைக் கண்டு பிடித்தலும், தானத்தின் உருவத்தைச் சொல்லி அது எத்தனையாவது என்று கண்டு பிடித்தலும்.

साधारणं भवेद्वेधा स्वरजाति विशेषणात् ।
स्वरसाधारणं तत्र चतुर्धा परिकीर्तितम् ॥ १३७ ॥
काकल्यन्तरषड्जैश्च मध्यमेन विशेषणात् ।
अन्तरस्यापि गमयोरेवं साधारणं मतम् ॥ १३८ ॥
निषादोयदिषड्जस्य श्रुतिमाद्यां समाश्रयेत् ।
ऋषभश्चान्तिमां प्रोक्तं षड्जसाधारणं तदा ॥ १३९ ॥
मध्यमस्यापि गमयोः एवं साधारणं मतम् ।
रागालापनसंयुक्तं जाति साधारणं विदुः ॥ १४० ॥
इति साधारण प्रकरणम् ।

(137—140) Sadharana or common-feaured Swaras and Jatis :—

Swaras :—

(1) antara, (2) Kakali, (3) Shadjasadharana & (4) Madhyama sadharana.

Jatis:—

Mixed jatis, described later.

(சு. 137-140) 'சாதாரணம்' அல்லது ஒன்றுக்கு மேல் பட்ட ஸ்வரங்களின் குணங்களையுடைய ஸ்வரங்களும் ஒன்றுக்கு மேற்பட்ட ஜாதிகளின் குணங்களுடைய ஜாதிகளும் ;—

சாதாரண ஸ்வரங்கள் :— (1) அந்தரம், (2) காகலி, (3) ஷட்ஜ சாதாரணம், மத்யம சாதாரணம்.

சாதாரண ஜாதிகள் :— பிந்தி விவரிக்கப் பட்டிருக்கின்றன.

गानक्रियोच्यते वर्णः सचतुर्धानिरूपितः ।
स्थाय्यारोह्यवरोही च संचारीचाथलक्षणम् ॥ १४१ ॥

स्थित्वास्थित्वा प्रयोगः स्यात् एकैकस्य स्वरस्ययः ।
स्थायी वर्णः सविज्ञेयः परावन्वर्थ नामकौ ॥

एतत्संमिश्रणाद्वर्णः सञ्चारी परिकीर्तितः ।
अथवा । यत्रोपविशतेरागः स्वरःस्थायी स कथ्यते ॥ १४२ ॥

इति स्थाय्यादिवर्णलक्षणम् ।

(141—142) 'Varna' or musical effort. 4 in numbers : as cent, descent, going up & down and staying in a note-

(சு, 141-142) 'வர்ணம்' அல்லது கானக்ரியை. இது 4 வகை ;— ஆரோகி, அவரோகி, சஞ்சாரி, ஸ்தாயி— அதாவது ஏறுதல், இறக்குதல், மேலும் கீழும் செல்லுதல், ஒரே இடத்தில் நிற்றல்.

गीतादौस्थापितो यस्तु सग्रहस्वर उच्यते । इति ग्रहस्वरः ।
न्यासस्वरस्तु विज्ञेयः यस्तु गीतसमापकः । इति न्यासस्वरः ।
बहुलत्वं प्रयोगेषु सअंशस्वर उच्यते ॥१४३॥ इति अंशस्वरः ।

143— 'Graha' or the note with which tune starts, Nyasa' or the 'finale'; and 'Amsa' or the dominant note of the tune, or the note most freeuenthy used.

(சு. 143) 'க்ரஹ ஸ்வரம்' அல்லது ராகம் ஆரம்பிக்கும் ஸ்வரம்; 'நியாஸ ஸ்வரம்' அல்லது ராகம் முடியும் ஸ்வரம்; அம்ச ஸ்வரம்' அல்லது ராகத்தின் முக்கிய ஸ்வரம் அல்லது ராகத்தில் அடிக்கடி உபயோகிக்கப்படும் ஸ்வரம்.

विशिष्टवर्णसन्दर्भमलङ्कारं प्रचक्षते ।
एकैकस्यां मूर्छनायां त्रिषष्टिरुदिताबुधैः ॥ १४४ ॥

अथ अलङ्कारप्रस्तारः । सरि सरिग रिग रिगम गम गमप ।

मप मपध पध पधनि धनि धनिस इति प्रथमः ।

सस रिरि गग मम पप धध निन सस इतिद्वितीयः ॥ १४५ ॥

इति अलङ्कारलक्षणम् ।

(144—145) Alankaras or graceful varicty in the four forms of musical effort.

சு. (144—145) 'அலங்காரங்கள்' அல்லது வர்ணங்களின் அழகிய வகைகள்.

ग्रहांशतारमन्द्राश्च न्यासापन्यासकौतथा ।

अपि सन्यासविन्यासौ बहुत्वं चाल्पताततः ॥ १४६ ॥

इति राग लक्षणं

146. The function of swaras in the formaton of Ragas :—

Graha (Initial note) Amsa (Dominant note) Tara-Highest note) Mandra (Lowest note) Nayasa (Final note) Apanyas (notes for Staying) Sanyasa & Vinyasa (notes for beginning & ending of parts of a musical piece)

(சு. 146) ராகத்தின் முக்கிய ஸ்வரங்கள் ;—

கிரஹம் (ஆரம்பிக்கும் ஸ்வரம்,) அம்சம் (முக்கிய ஸ்வரம்,) தாரம் (ராகத்தின் மேல் கோடி,) மந்த்ரம் (கீழ் கோடி.) நியாஸம் (முடிக்கும் ஸ்வரம்,) அபந்நியாஸம் (இடையே நிற்கும் ஸ்வரம்,) ஸந்நியாஸ, விந்நியாஸம் (ராகப் பகுதிகளின் ஆரம்பம், முடிவு).

अथ स्वरा उच्यन्ते ।

श्रुतिभ्यः स्युः स्वराः षड्जऋषभगान्धारमध्यमाः ।

पञ्चमोधैवतश्चेति निषाद इति सप्तते ।

तेषां संज्ञासरिगम पधनीत्यपरामताः ॥ १४७ ॥

षड्जं वदति मयूरः स्वरमृषभं चातको ब्रूते ।

गान्धाराख्यं छागो निगदति पक्षी मध्यमं क्रौञ्चः ॥ १४८ ॥

गदति पञ्चममंचितवाक् पिकोरटति धैवतमुन्मददर्दुरः ।
सृणिसमाहतमस्तक कुन्जरो गदति नासिकयाखरमन्तिमम् ॥
मयूरचातक छाग क्रौञ्च कोकिल दर्दुराः ।
गजश्च सप्तषड्गादीन् क्रमादुच्चारयन्त्यमि ॥ १९० ॥
इति चतुरदामोदरविरचिते सङ्गीतदर्पणे स्वराध्यायः ॥

(147—50) The Seven notes and the corresponding sounds in nature.

(சு 147—150) ஏழுஸ்வரங்களும் அவற்றை ஒலிக்கும் பிராணிகளும்.

---

## अथ रागाध्यायः

योऽयं ध्वनिविशेषः स्यात् स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां सरागः कथितो बुधैः ॥ १९१ ॥
अथ रागाङ्ग भाषाङ्ग क्रियाङ्गोपाङ्गनिर्णयः ।
रागछायानुकारित्वात् रागाङ्गमिति कथ्यते ॥ १९२ ॥
भाषांगं भाषाच्छाया(या) भाषांगस्थेन हेतुना ।
करुणोत्साहसंयुक्तः क्रियांगस्तेनहेतना ॥ १९३ ॥
इतिरागांग भाषां गक्रियां गविवेकः ।

(151-153) "Raga", its definition and its kinds, namely (1) Raga (2) Bhasha (3) Raganga (4) Bhashanga and Kriyanga.

(சு. 151-153) "ராகம்" என்றால் என்ன?

அதன் வகைகள் :— (1) ராகம் (2) பாஷை (3) ராகாங்கம் (4) பாஷங்கம் (5) க்ரியாங்கம்.

काण्डारणातुकथिता तारस्थानेतिशीघ्रता ।
गमकैर्विविधैर्युक्ता कौशल्यसहिता मता ॥ १९४ ॥

इति काण्डरणा ।

(154) "Kandarana" or the the tremulo and other graces in the higher octaves.

(சு. 154) "காண்டாரணை" அல்லது மேல் ஸ்தாயியில் கமகங்கள் நிறைந்த துரித சஞ்சாரம்.

अथ मतङ्गमतेन रागाणां त्रैविध्यं दर्शयति ।
शुद्धाः छायालगाः प्रोक्ताः सङ्कीर्णाश्च तथैव च ॥ १९९ ॥

तत्र शुद्धरागत्वं नाम शास्त्रोक्तनियमाद्रंजकत्वं भवति ।
छायालगरागत्वं नाम अन्यछायानुलगत्वेन रक्तिहेतुत्वम् ।
सङ्कीर्णरागत्वं नाम शुद्धछायालगमुख्यत्वेन रक्तिहेतुत्वम् ॥ १५६ ॥

इति कल्लिनाथोक्तं लिखितम् ।

(155—156) The 3 kinds of Ragas according to Matanga :—Suddha, Chhayalaga, and Sankirna.

The 1st kind follows the classical rules of the ancient texts.

The 2nd kind makes a slight deviation while following, in the main, the path of the Suddha ragas.

The 3rd kind is formed with the help of the ragas of the 1st and 2nd kind.

(சு. 155—156) மதங்கர் சொல்லியபடி ராகங்களின் வகை:—

(1) சுத்தம் (சாஸ்திரப்படி அமைந்தவை.)
(2) சாயாலகம் (சிறிது மாறியவை.)
(3) சங்கீர்ணம் (முதல் இகண்டு வகையும் கலந்தவை.)

औडवः पञ्चभिः प्रोक्तः स्वरैः षड्भिस्तु षाडवः ।
सम्पूर्णः सप्तभिर्ज्ञेयस्त्वेवं रागस्त्रिधामतः ॥ १५७ ॥

(157) Classification according to the no. of swaras occurring in the raga:—

(1) Sampurna (7 swaras.)
(2) Shadava (6 swaras.)
(3) Oudava (5 swaras.)

(சு. 157) ராகங்களிலுள்ள ஸ்வரங்களின் எண்ணிக்கையைப் பொறுத்து ராகங்களின் வகை:—

(1) ஸம்பூர்ணம் (7 ஸ்வரங்கள்.)
(2) ஷாடவம் (6 ,, .)
(3) ஔடவம் (5 ,, .)

श्रीराग नट्टौ बङ्गालो भासमध्यम षाडवौ ।
रक्तहंसः कोह्लहासः प्रसभो भैरवध्वनिः ॥ १५८ ॥

मेघरागः सोमरागः काम्बोदश्चाम्रपञ्चमः ।
स्यातां कन्दर्पदेशाख्यौ ककुभान्तश्च कैशिकः ।
नट्टनारायणश्चेति रागविंशतिरीरिताः ॥ १५९ ॥

* (158-59) The well known classical Ragas 20 in number.

(சு. 158-59) 20 பழைய பிரசித்த ராகங்கள்.

अथ रागरागिणीमतम् ।

शिवशक्तेः समायोगात् रागाणां सम्भवोभवेत् ।
पञ्चास्यात् पञ्चरागास्स्युः षष्ठस्तु गिरिजामुखात् ॥ १६० ॥

सद्योवक्त्रात्तु श्रीरागो वामदेवाद्वसन्तकः ।
अघोराद्भैरवो जातः तत्पुरुषात्तु पञ्चमः ॥ १६१ ॥

ईशानाख्यान्मेघरागो नाट्यारम्भे शिवादभूत् ।
गिरिजाया मुखाल्लास्ये नट्टनारायणोऽभवत् ॥ १६२ ॥

" केरागाः काश्चरागिण्यः कावेला ऋतवश्चके ।
किंरूपं कथमुद्धारः वद देव प्रसादतः " ॥ १६३ ॥

श्रीरागोऽथ वसन्तश्च भैरवः पञ्चमस्तथा ।
मेघरागो बृहन्नाटः षडेते पुरुषाह्वयाः ॥ १६४ ॥

इति षड्पुरुषरागाः ।

अथरागिण्यः ।

मालवी त्रिवणी गौडी केदारी मधुमाधवी ।
ततः पाहाडिकाज्ञेया श्रीरागस्य वराङ्गनाः ॥ १६५ ॥

देशी देवगिरी चैव वराटी टोडिकातथा ।
ललिताचाथ हिन्दोली वसन्तस्य वराङ्गनाः ॥ १६६ ॥

भैरवी गुर्जरीचैव रेवा गुणकरी तथा ।
बङ्गाली बहुलीचैव भैरवस्य वराङ्गनाः ॥ १६७ ॥

विभासश्चाथ भूपाली कर्णाटी बडहंसिका ।
मालवश्रीपढमञ्जर्या सहैताः पञ्चमाङ्गनाः ॥ १६८ ॥

मल्हारी सोरटी चैव सावेरी कौशिकी तथा ।
गान्धारि हरिश्रृङ्गारा मेघरागस्य योषितः ॥ १६९ ॥

कामोदीचैव कल्याणी आभेरी नाटिका पुनः ।
सालङ्गीनट्टहंजी(वी)रा नटनारायणाङ्गनाः ॥ १७० ॥

इति षड्त्रिंशद्रागिण्यः ।

(160-170) Classification of Ragas into masculine and femminine :—

(1) Someswara's Classification :— 6 'Ragas' or masculine tunes, each having 6 'Raginis' or consorts.

(சு. 160-170) ராகங்களின் பாகுபாடு :—

(1) ஸோமேசுவரரின் மதப்படி புருஷ ராகங்கள் 6ம், ஒவ்வொன்றுக்கும் 6 ஸ்திரீகளாகிய ராகிணிகளும்.

अथरागवेळा ।

मधुमाधवीच देशाख्या भूपाली भैरवी तथा ।
वेलावलीच मल्हारी वङ्गाली साम गुर्जरी ॥ १७१ ॥

धनाश्री मालवश्रीश्च मेघरागश्च पञ्चमः ।
देशकारो भैरवश्च ललितश्च वसन्तकः ॥ १७२ ॥

एते रागाः प्रगीयन्ते प्रातरारभ्यनित्यशः ।
गुर्जरी कौशिकश्चैव सावेरी पढमञ्जरी ॥ १७३ ॥

रेवा गुणकरी चैव भैरवी रामकर्यपि ।
सोरटी च तथा गेया प्रथमप्रहरोत्तरम् ॥ १७४ ॥

वैराटी टोडिकाचैव कामोदीच कुडायिका ।
गान्धारी नागशब्दीच तथादेशी विशेषतः ॥ १७५ ॥

शङ्कराभरणो ज्ञेयो द्वितीयप्रहरात्परम् ।
श्रीरागोमाल्वाख्यश्च गौडी त्रिवणसंज्ञकः ॥ १७६ ॥

नटकल्याण संज्ञश्च साल्ङ्गं नट्टकं तथा ।
सर्वे नाटाश्च केदारी कर्णाट्याभीरिका तथा ॥ १७७ ॥

बडहंसी पहाडीच तृतीय प्रहरात्परम् ।
अर्धरात्रावधिर्गेया रागा एते सुखप्रदाः ॥ १७८ ॥

यथोक्तकाल एवैते गेयाः पूर्व त्रिधानतः ।
राजाज्ञया सदागेया नतु कालं विचारयेत् ॥ १७९ ॥

इति रागवेळा ॥

श्रीरागो रागिणीयुक्तः शिशिरे गीयते बुधैः ।
वसन्तस्स्वसहायैस्तु बसन्ततौ प्रगीयते ॥ १८० ॥

भैरवः स्वसहायैस्तु ऋतौ ग्रीष्मे प्रगीयते ।
पञ्चमस्तु तथागेयो रागिण्या सह शारदे ॥ १८१ ॥

मेघरागो रागिणीभिः युक्तोवर्षासुगीयते ।
नट नारायणोरागो रागिण्यासहहेमके ।
यथेच्छया वा गातव्याः सर्वर्तुषु सुखप्रदाः ॥ १८२ ॥

इति ऋतुवेला ।

—इति सोमेश्वरमतम् ।

(171-182) The proper time of the day and the season for particular Ragas.

(சு. 171-182) ராகங்களுக்குத் தகுதியான வேளையும் ருதுவும்

अथ हनूमन्मतम् ।

भैरवो कौशिकश्चैव हिन्दोलो दीपकस्तथा ।
श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः ॥ १८३ ॥

मध्यमादिर्भैरवी च बङ्गाली च वराटिका ।
सैन्धवी च पुनर्गेया भैरवस्य वराङ्गनाः ॥ १८४ ॥

टोडी खभावती गौडी गुणक्री ककुभा तथा ।
रागिण्यो रागराजस्य कौशिकस्य वराङ्गनाः ॥ १८५ ॥

वेलावली रामकरी देशाख्या पढमञ्जरी ।
ललिता सहिता एता हिन्दोलस्य वराङ्गनाः ॥ १८६ ॥

केदारी कानडा देशी कामोदी नाटिका पुनः ।
दीपकस्य प्रियाः पञ्च ख्याता रागविशारदैः ॥ १८७ ॥

वसन्ती मालती चैव मालश्रीश्च धनाश्रिका ।
असावेरीति विज्ञेयाः श्रीरागस्य वराङ्गनाः ॥ १८८ ॥

मल्लारी देशकारी च भूपाली गुर्जरी तथा ।
टक्कश्च पञ्चमीभार्या मेघरागस्य योषितः ॥ १८९ ॥

इति हनुमन्मते रागरागिण्यः ।

(183-189) Classification according to Hanuman :— 6 masculine Ragas, each having 5 consorts or Raginis.

(சு. 183-189) ஹனுமத் பரதம் என்னும் நூலில் சொல்லப் பட்டிருக்கும் பிரிவினை :—

6 புருஷ ராகங்களும் ஒவ்வொன்றுக்கும் 5 ஸ்திரீகளாகிய ராகிணிகளும்.

अथ रागार्णव मतम् ।

भैरवः पञ्चमो नाटो मल्लारो गौडमालवः ।
देशाख्यश्चेति षड्रागाः प्रोच्यन्ते लोकविश्रुताः ॥ १९० ॥

बङ्गालीयं गुणकरी मध्यमादिर्वसन्तकः ।
धनाश्रीश्चेति पञ्चैते रागा भैरवसंश्रयाः ॥ १९१ ॥

ललितागुर्जरीदेशी वराटी रामकृत्तथा ।
मता रागार्णवे रागाः पञ्चैते पञ्चमाश्रयाः ॥ १९२ ॥

नटनारायणः पूर्वगान्धारः सालगस्तथा ।
ततः केदारकर्णाटौ पञ्चैते नाटसंश्रयाः ॥ १९३ ॥

मेघमल्लारिका मालकौशिकः पढमञ्जरी ।
असावेरीति विज्ञेयाः रागा मल्लारिसंश्रयाः ॥ १९४ ॥

हिन्दोलस्त्रवणांधारी गौडी च पडहंसिका ।
पञ्चैते रागनामानं गौडमाश्रित्य संस्थिताः ॥ १९९

भूपालीच कुडायीच कामोदी नाटिका तथा ।
वेलावलीति विज्ञेया रागादेशाख्यसंश्रयाः । इति रागार्णवमतम्।
न तालानां न रागाणां अन्तः कुत्रापि विद्यते ॥ १९६ ॥

* (190-196) Classification according to Ragarnava:- 6 principal ragas, and 5 subordinate ragas attached to each of the principal ones.

(சு. 190-196) ராகார்ணவ மதப்படி ராகங்களின் பிரிவினை:- 6 முக்ய ராகங்களும் ஒவ்வொரு முக்ய ராகத்துக்கும் சார்பு ராகங்கள் 5ம்.

## इदानीं राग रागिण्युदाहरणं प्रारभ्यते ॥

धैवतांश ग्रहन्यासो रिपहीनोथ मागतः ।

भैरवस्सतु विज्ञेयः धैवतादिक मूर्छनः ।

धैवतो विकृतोयत्र औडवः परिकीर्तितः ॥ १९७ ॥

उदाहरणम् ।

गङ्गाधरः शशिकलातिलकस्त्रिनेत्रः

सर्पैर्विभूषिततनुर्गजकृत्तिवासाः ।

भास्वत्त्रिशूलकर एष नृमुण्डधारी

शुभ्राम्बरोजयति भैरव आदिरागः ॥ १९८ ॥

धनि सगमधनि । इति भैरवः ॥ १ ॥

(197-198) Bhairava raga lakshana.
(ச. 197-198) 'பைரவ' ராக லக்ஷணம்.

मध्यमादिश्चरागांगा ग्रहांशन्यास मध्यमा ।
सप्तस्वरैस्तु गातव्या मध्यमादिक मूर्छना ।
सम्पूर्णा कथिता तद्ज्ञैः रिधहीना क्वचिन्मता ॥ १९९ ॥

उदाहरणम् ।

पत्या सहासं परिरभ्य कामं संचुम्बितास्या कमलायताक्षी ।
स्वर्णच्छविः कुङ्कुमलिप्तदेहा सामध्यमादिः कथिता मुनीन्द्रैः ॥२००॥
पधमनी सरिगमा अथवा मम पम पनि सनिगम, ।

इति मध्यमादिः ॥ २ ॥

(199-200) Raga Madhyamadi lakshana.
(ச. 199-200) 'மத்யமாதி' ராக லக்ஷணம்.

सम्पूर्णा भैरवी ज्ञेया ग्रहांशन्यास मध्यमा
सौवीरीमूर्छना ज्ञेया मध्यमग्रामचारिणी ।
केचिदेनां भैरववत् स्वरैर्ज्ञेया विचक्षणैः ॥ २०१ ॥

उदाहरणम् ।

स्फटिकरचितपीटे रम्यकैलासशृङ्गे
विकचकमलपत्रैरर्चयन्तीमहेशम् ।
करधृतघनवाद्या पीतवर्णायताक्षी
सुकविभिरियमुक्ता भैरवी भैरवस्त्री ॥ २०२ ॥

मपधनि सरि गम अथवा धनि सगम धप ॥ इति भैरवी ॥ ३ ॥

(201-202) 'Bhairavi' lakshana.
(சு. 201-202) 'பைரவி' லக்ஷணம்.

बङ्गाली औडवाज्ञेया ग्रहांशन्यासषड्जभाक् ।
रिध हीना च विज्ञेया मूर्छना प्रथमा मता ।
पूर्णा वा मत्रयोपेता कल्लिनाथेन भाषिता ॥ २०३ ॥

उदाहरणम् ।

कक्षे निवेशितकरंण्डधरस्तपस्वी
भास्वत्त्रिशूल परिमण्डितवामहस्तः ।
भस्मोज्ज्वलो निबिडबद्धजटाकलापः
बङ्गाल इत्यभिहितस्तरुणार्कवर्णः ॥ २०४ ॥

सगम पनि स अथवा मपधनि सरि गम । इति बङ्गाली ॥४॥

(203-204) 'Bangali' lakshana.
(சு. 203-204) 'பங்காளி' லக்ஷணம்.

षड्जग्रहांशकन्यासा वराटी कथिता बुधैः ।
प्रथमा मूर्छना यस्यां सम्पूर्णा कीर्तिवर्धनी ॥ २०५ ॥

उदाहरणम् ।

विनोदयन्ती दयितं सुकेशी सुकङ्कणा चामरचालनेन ।
कर्णे दधाना सुरवृक्षपुष्पं वराङ्गनेयं कथिता वराटी ॥ २०६ ॥

सरिगम पधनिस । इति वराटी ॥ ५ ॥

(205-206) 'Varati' lakshana.
(205-206) 'வராடி' (வராளி) லக்ஷணம்.

षड्जग्रहांशकन्यासा सम्पूर्णा सैन्धवी मता ।
मूर्छनोत्तरमन्द्राद्या कैश्चित् षाडविका मता ।
रिहिना तु भवेन्नित्यं रसे वीरे प्रयुज्यते ॥ २०७ ॥

उदाहरणम् ।

त्रिशूलपाणिः शिवभक्तियुक्ता रक्ताम्बरा धारितबंधुजीवा ।
वीरे रसे गायकगीतवर्णा सा सैन्धवी भैरवरागिणीयम् ॥२०८॥

सरिगम पधनिस अथवा सगमपधनिस इति । सैन्धवी ॥ ६ ॥
इति पंचभार्यासहितोभैरवः ।

(207-208) 'Saindhavi' lakshana.
(சு. 207-208) 'ஸைந்தவி' லக்ஷணம்.

षड्जग्रहांशकन्यासः सम्पूर्णः कौशिको मतः ।
मूर्छना प्रथमा ज्ञेया काकलीस्वरसम्मतः ॥ २०९ ॥

उदाहरणम् ।

आरक्तवर्णो धृतगौरयष्टिः वीरः सुवीरेषु कृतप्रवीरः ।
वीरैर्वृतो वैरिकपोलमालामाली मतो मालवकौशिकोयम् ॥२१०॥

सरिगमपधनिस सनिधपमगरिस । इति मालव कौशिकः ॥७॥

(209-210) 'Malava Kausika' lakshana.
(சு. 209-210) 'மாளவ கௌசிக' லக்ஷணம்.

मध्यमांश ग्रहंन्यासा सौवीरी मूर्छना मता ।

सम्पूर्णा कथिता तज्ज्ञैः टोडी स्त्री कौशिके मता ।
ग्रहांशन्यासषड्जश्च केचिदत्र प्रचक्षते ॥ २११ ॥

उदाहरणम् ।

तुषार कुन्दोज्ज्वल देहयष्टिःकाश्मीर कर्पूर विलिप्तदेहा ।
विनोदयन्ती हरिणं वनान्ते वीणाधरा राजति टोडिकेयम् ॥२१२॥
मपधनि सरिगम अथवा सरिगम पधनिस । इति टोडी ॥८॥

(211-212) 'Todi' lakshana.
(சு. 211-212) 'டோடி' (தோடி) லக்ஷணம்.

धैवतांश ग्रहन्यासा षाडवा त्यक्तपञ्चमा ।
खंभावतीच विज्ञेया मूर्छना पौरवी मता ॥ २१३ ॥

उदाहरणम् ।

खंभावतिः स्यात् सुखदा रसज्ञा सौन्दर्यलावण्य विभूषिताङ्गी ।
दानप्रिया कोकिल तुल्यनादा प्रियं वदा कौशिकरागिणीयम् ॥२१४॥

धनि सरि गमध । इति खंभावती ॥ ९ ॥

(213-214) 'Khambhavati lakshana.
(சு. 213-214) 'கம்பாவதி' லக்ஷணம்.

ग्रहांशन्यासषड्जास्या द्रिपवर्जा सुखप्रदा ।
मूर्छना प्रथमा ज्ञेया गौरी सर्वाङ्गसुन्दरी ॥ २१५ ॥

उदाहरणम् ।

निवेशयन्ती श्रवणेवतंसमाम्राङ्कुरं कोकिलनादरम्या ।
श्यामा मधुस्यन्दितसूक्ष्मनादा गौरीयमुक्ता किल कोहलेन ॥२१६॥

सगमधनिस सनिधमगम । इति गौरी ॥ १० ॥

(215-216) 'Gouri' lakshana
(ஃ. 215-216) 'கௌரி' லக்ஷணம்.

रिधहीना गुणकरी चौडवा परिकीर्तिता ।
निग्रहांशा तुनिन्यासा कैश्चित् षड्जत्रयामता ॥
रजनी मूर्छना चात्र मालवाश्रयणी तु सा ॥ २१७ ॥

उदाहरणम् ।

शोकाभिभूतनयनारुणदीनदृष्टिः
नम्राननना धरणिधूसरगात्रयष्टिः ।
आमुक्तचारुकबरी प्रियदूरवर्ती
संकीर्तिता गुणकरी करुणे कृशाङ्गी ॥ २१८ ॥

निसगमपनि निपमगसनि अथवा सगमपनिस । इति गुणकरी ॥ ११॥

(217-218) 'Gunakari' lakshana.
(ஃ. 217-218) 'குணகரி' லக்ஷணம்.

धैवतांशग्रहन्यासा सम्पूर्णा ककुभामता ।
तृतीयमूर्छनोत्पन्ना शृङ्गाररसमण्डिता ॥ २१९ ॥

उदाहरणम् ।

सुपोषिताङ्गी रतिमण्डिताङ्गी चन्द्रानना चम्पकदामयुक्ता ।
कटाक्षिणी स्यात् परमा विचित्रनादेन युक्ता ककुभा मनोज्ञा ॥

धनिसरिगमपध इति ककुभा ॥ इति पञ्चभार्यासहितो
मालव कौशिकः ॥ १२ ॥

(219-220) 'Kakuba' lakshana.
(219 220) 'ககுபா' லக்ஷணம்.

हिन्दोलको रिधत्यक्तः सत्रयः कथितो बुधैः ।
मूर्छना शुद्धमध्या स्यात् औडवः काकलीयुतः ॥ २२१ ॥

उदाहरणम् ।

नितम्बिनीमन्दतरङ्गितासु दोलासु खेलासुखमादधानः ।
खर्वःकपोतद्युतिकामयुक्तो हिन्दोलरागः कथितोमुनीन्द्रैः ॥ २२२ ॥

सगम पानि मपस । इति हिन्दोलः ॥ १३ ॥

(221-222) 'Hindola' lakshana.
(ஃ. 221-222) 'ஹிந்தோள' லக்ஷணம்.

धैवतांशग्रहन्यासा पूर्णा वेलावली मता ।
पौरवीमूर्छना ज्ञेया रसेवीरे प्रयुज्यते ॥ २२३ ॥

उदाहरणम् ।

सङ्केतदीक्षां दयिते च दत्वा त्रितन्वती भूषणमङ्गकेषु ।
मुहुः स्मरन्ती स्मरमिष्टदेवं वेलावली नीलसरोजकान्तिः ॥२२४॥

धनि सरि गम पध । इति वेलावली ॥ १४ ॥

(223-224) 'Velavali' lakshana.
(ஃ. 223-224) 'வேளாவளி' லக்ஷணம்.

षड्जग्रहांशकन्यासा पूर्णा रामकरी मता ।
मूर्छना प्रथमा ज्ञेया करुणे सा प्रयुज्यते ॥ २२५ ॥

रिधत्यक्ता तु केचित्तु केचित्पञ्चमवर्जिता ।
षाडवा औडवा ज्ञेया सम्पूर्णा च त्रिधा मता ॥ २२६ ॥

उदाहरणम् ।

हेमप्रभाभासुरभूषणा च नीलं निचोलं वपुषा वहन्ती ।
कान्ते समीपे कमनीयकण्ठा मानोन्नता रामकरी मतेयम् ॥ २२७ ॥

सगमपनिस अथवा सरिगमपधनिस अथवा सरिगमधनि स । इतिरामकरी॥

(225-227) 'Ramakari' lakshana.
(ஈ. 225-227) 'ராமகரி' லக்ஷணம்.

देशाख्या षाडवा ज्ञेया गत्रयेण विभूषिता ।
ऋषभेण वियुक्ता सा शार्ङ्गदेवेन कीर्तिता ॥
मूर्छनाहरिणाश्वा च सम्पूर्णा केचिदूचिरे ॥ २२८ ॥

उदाहरणम् ।

वीरे रसे व्यंजितरोमहर्षा निरुध्य सम्वद्धविलासबाहुः ।
प्रांशुः प्रचण्डा किल सुंदराङ्गी देशाख्यारागः कथितो मुनीन्द्रैः ॥ २२९ ॥

[ हिन्दोलकान्ताकिल देशकारः । इति वापाठः ] ॥ गमप्रधनिसग अथवा गमपधनिसरिग इति देशाख्या ॥ १६ ॥

(228-229) 'Desakhya' lakshana,
(ஈ, 228-229) 'தேசாக்யா' (தேசாக்ஷி) லக்ஷணம்,

पञ्चमांश ग्रहन्यासा पूर्णा स्यात्पटमञ्जरी ।
हृष्यका मूर्छना ज्ञेया रसिकानां सुखप्रदा ॥ २३० ॥

उदाहरमम् ।

वियोगिनी कान्तविशीर्णनेत्रा स्रजं वहन्ती वपुषा च शुक्लाम् ।
आश्वास्यमाना प्रियया च सख्या सुधूसराङ्गी पटमञ्जरीयम् ॥

(230-231) 'Patamanjari' lakshana,

प ध निस रीगमप । इति पटमञ्जरी ॥ १७ ॥
(சு. 230—231) படமஞ்சரி லக்ஷணம்.

रिपवर्जा च ललिता औडवा सत्रया मता ।
मूर्छनाशुद्धमध्या स्यात् संपूर्णा केचिदूचिरे ॥
धैवतत्रयसंयुक्ता द्वितीयललिता मता ॥ २३२ ॥

उदाहरणम् ।

प्रफुल्लसप्तच्छदमाल्ययुक्ता गौरी कृशाङ्गी तरुणी चलाक्षी ।
विनिश्वसन्त्सादवशात् प्रभाते विलासवेशा ललितोपदिष्टा ॥ २३३ ॥

सगमधनिस अथवा धनि सगमध । इति ललिता ॥ १८ ॥

इति पञ्च भार्यासहितो हिन्दोलकः ॥
(232—233) 'Lalita' lakshana
(சு. 232—233) லலிதா லக்ஷணம்.

षड्जग्रहांशकन्यासः सम्पूर्णो दीपको मतः ।
मूर्छना शुद्धमध्यास्यात् गातव्या गायनै सदा ॥ २३४ ॥

उदाहरणम् ।

बाला रतार्थे प्रविलीनदीपे गृहेऽन्धकारे सुभगी प्रवृत्ता ।
तस्याः शिरोभूषणरत्नदीपैः लज्जां तदानीं कृतवान्प्रदीपः ॥ २३५ ॥

स रि ग म प ध नि स । इति दीपकः ॥ १९ ॥

(234-235) 'Dipaka' lakshana.
(சு. 234-235) 'தீபக' லக்ஷணம்.

केदारी रिधहीनास्यात् औडवा परिकीर्तिता ।
नित्रया मूर्छनामार्गी काकलीस्वरसम्मिता ॥ २३६ ॥

उदाहरणम् ।

जटांदधानः सितचन्द्रमौलिः नागोत्तरीयो धृतयोगपीठः ।
गङ्गाधरो ध्याननिमग्नचित्तः केदारराग: कथितस्तपस्वी ॥ २३७ ॥

[ विरहविधुरचित्ता पाण्डुगण्डा कृशाङ्गी
मलयजरसपूरैः सिच्यमाना सखीभिः ।
सरसकमलपत्रैः क्लृप्तशय्यानिविष्टा
हिमकरसितवस्त्रा भाति केदारिकेयम् ॥ २३८ ॥]

नि स ग म प नि नि प म ग स नि । इति केदारी ॥ २० ॥

(236-238) 'Kedari' lakshana.
(சு. 236-238) 'கேதாரீ' லக்ஷணம்.

त्रिनिषादोथ संपूर्णः निषादो विकृतो भवेत् ।
मार्गीयं मूर्छना ज्ञेया कर्णाटीयं सुखप्रदा ॥ २३९ ॥

उदाहरणम् ।

कर्णाटी कमलेक्षणा सुरतरोर्मूले वसन्ती मुहुः
श्वासोच्छ्वासविभिन्नमोदमभितः सम्पूरयन्ती दिशः
कीरं नीलनिचोलजुष्टमभितः स्वर्णाभया बिभ्रती ।
कान्तारे पिककूजिते स्वदयितं साङ्केतिके पश्यति ॥ २४० ॥

निसरिगमपधनि । इति कर्णाटी ॥ २१ ॥

(238-240) 'Karnati' lakshana.
(சு. 238-240) 'கர்ணாட' லக்ஷணம்.

देशी पञ्चमहीना स्यात् ऋषभत्रयसंयुता ।
कलोपनतिका ज्ञेया मूर्छना विकृतर्षभा ॥ २४१ ॥

उदाहरणम् ।

निद्रालसं सा कपटेन कान्तं विबोधयन्ती सुरतोत्सुकेन ।
गौरी मनोज्ञा शुकपुच्छवस्त्रा ख्याताच देशी रसपूर्णचित्ता ॥ २४२ ॥

रिगमधनिसरि इति देशी ॥ २२ ॥

(240-242) 'Desi' lakshana.
(ச. 240-242) 'தேசி' லக்ஷணம்.

धांशन्यासग्रहा पूर्णा पौरवी मूर्छना मता ।
मल्लारनिकटे गेया कामोदी च निगद्यते
शिवभूषणकेदारयुक्ता सर्वसुखप्रदा ॥ २४३ ॥

उदाहरणम् ।

पीतंवसाना वसनं सुकेशी वने रुदन्ती पिकनाददूना ।
विलोकयन्ती त्रिदिशोऽतिभीता कामोदिकाकान्तमनुस्मरन्ती ॥

धनिसरिगमपध । इति कामोदी ॥ २३ ॥

(242-244) 'Kamodi' lakshana.
(ச. 242-244) 'காமோதி' லக்ஷணம்.

ग्रहांशन्यासषड्जा स्यात् सम्पूर्णा नाटिका मता ।
प्रथमा मूर्छना ज्ञेया गमकै र्बहुधा मता ॥ २४५ ॥

उदाहरणम् ।

उत्फुल्लानुसुहृच्छवि विकसितं पङ्केरुहं पाणिना
स्पृश्यन्ती मधुपानघूर्णनयना तन्वी तमालद्युतिः ।
ताम्बूलाहरणच्छलेन दयितं सङ्केतयन्ती निजं
क्रीडाकुञ्जगृहे लवङ्गलतिकामोदानिले कामिनी ॥ २४६ ॥

जपाकुसुमसङ्काशां निचोलं पीतवाससम् ।
वहन्ती वपुषा तन्वी नाटिका रक्तकञ्चुकी ॥ २४७ ॥

सरिगमपधनिस सनिधपमगरिस । इति नाटिका ॥ २४ ॥

इति पञ्चभार्यासहितो हिन्दोलः ।

(244-246) 'Natika' lakshana.
(க, 244-246) 'நாடிகா' லக்ஷணம்.

श्रीरागः सचविख्यातः सत्रयेण विभूषितः ।
पूर्णः सर्वगुणोपेतः मूर्छना प्रथमा मता ॥
केचित्तु कथयन्त्येनं ऋषभत्रयसम्मतम् ॥ २४८ ॥

उदाहरणम् ।

अष्टादशाब्दः स्मरचारुमूर्तिः धीरोल्लसत्पल्लवकर्णपूरः ।
षड्जादिसेव्योऽरुणवस्त्रधारी श्रीरागराजः क्षितिपालमूर्तिः॥२४९॥

सरिगमपधनिस अथवा रिगमपधनिस इति श्रीरागः ॥ २५ ॥

(247-249) 'Sriraga' lakshana
(க. 247-249) 'ஸ்ரீராக' லக்ஷணம்.

वसन्ता स्यात्तु संपूर्णा सत्रया कथिता बुधैः ।
श्रीरागमूर्छनैवात्र गेया रागविशारदैः ॥ २५० ॥

उदाहरणम् ।

शिखण्डिबर्होच्चयबद्धपीडा कर्णावतंसा स्फुरदाम्रपत्रा ।
इन्दीवरश्यामतनुर्मनोज्ञा वसन्तिका स्यादलिमञ्जुलश्रीः ॥२५१

सरिगमपधनिस इति वसन्तिका ! ॥ २६ ॥

(249-251) 'Vasantika' lakshana.
(க. 249-251) 'வஸந்திகா' (வஸந்தா) லக்ஷணம்.

मालवी चौडवा ज्ञेया नित्रया प, रि, वर्जिता ।
रजनी मूर्छना ज्ञेया काकलीस्वरमण्डिता ॥ २५२ ॥

उदाहरणम् ।

नितम्बिनीचुम्बितवक्त्रपद्मः शुकद्युतिः कुण्डलवान्प्रमत्तः ।
सङ्गीतशालां प्रविशन्प्रदोषे मालाधरो मालव एष रागः ॥२५३॥

निसपमगनि । इति माळवी ।
[ निसरिमगनि इति वा पाठः ] ॥ २७ ॥

(352-253) 'Malavi' lakshana.
(ஸ. 252-253) 'மாளவி' லக்ஷணம்.

मालवश्रीश्चरक्ताङ्गी पूर्णा सत्रयभूषिता ।
मूर्छनोत्तरमन्द्रा स्यात् शृङ्गाररसमण्डिता ॥ २५४ ॥

उदाहरणम् ।

रक्तोत्पलं हस्ततले नियुक्तं विभावयन्ती तनुदेहवल्ली ।
रसालवृक्षस्यतले निषण्णा स्तोकस्मिता साकिल मालवश्रीः ॥

सरिगमपधनिस । इति माळवश्रीः ॥ २८ ॥

(254—255) 'Malavasri' lakshana.
(ஸ, 254—255) 'மாளவஸ்ரீ' லக்ஷணம்

सत्रया हीनऋषभा षाडवा च धनासिरी ।
मूर्छना प्रथमा ज्ञेया रसे वीरे प्रयुज्यते ॥ २५६ ॥

उदाहरणम् ।

दूर्वादलश्यामतनुर्मनोज्ञा कान्तं लिखन्ती विरहेण दूना ।
श्वेते कपोले नयनारविन्दनिष्यन्दनिर्धूतकुचा धनाश्रीः ॥

सगमपधनिस । इति धनाश्रीः ॥ २९ ॥

(256-257) 'Dhanasri' lakshana.
(ஸ, 256-257) 'தனஶ்ரீ' லக்ஷணம்,

असावरी गरित्यक्ता पग्रहां शांत(?) औडवा ।
न्यासस्तु धैवतोज्ञेयः करुणारसनिर्भरा ॥ २५८ ॥ अथवा

उदाहरणम् ।

ककुभाद्धैवतोत्पन्ना धैवतांशग्रहामता ।
पञ्चमेनैव रहिता षाडवा च निगद्यते ॥ २५९ ॥

श्रीखण्डशैलशिखरे शिखिपुच्छवस्त्रा
मातङ्गमौक्तिककृतोत्तमहारवल्ली ।
आकृष्य चन्दन तरोरुरगं वहन्ती
सासावरीति कथितोज्वल नीलकान्तिः ॥ २६० ॥

धनिसमपध । अथवा मधनिसरिगधगरिसनिध । इति सावेरी ॥ ३० ॥

(257-259) 'Asavari' (Saveri) lakshana.
(சு. 257-259) 'அஸாவரி' (ஸாவேரி) லக்ஷணம்.

इति पञ्चभार्यासहितः श्रीरागः ॥

मेघः पूर्णो धत्रयःस्यात् उत्तरायतमूर्छनः ।
विकृतो धैवतो गेयः शृङ्गाररसपूरकः ॥ २६१ ॥

उदाहरणम् ।

नीलोत्पलाभवपुरिन्दुसमानचैलः पीताम्बरस्तृषितचातकयाच्यमानः
पीयूषमन्दहसितोद्यममध्यवर्ती वीरेषु राजति युवा किल मेघरागः

धनिसरिगमपध इति मेघरागः ॥ ३१ ॥

(260-261) 'Megharaga lakshana.
(சு. 260-261) 'மேகராக' லக்ஷணம்.

मल्लारी सपहीनास्यात् ग्रहांशन्यासधैवता ।
औडवा पौरवी ज्ञेया वर्षासु सुखदा सदा ॥ २६२ ॥

---

1. 'Asavari' and 'saveri' are both indifferently used for the raga in older texts also.

गौरी कृशा कोकिलकण्ठनादा गीतछलेनात्मपतिं स्मरन्ती ।
आदाय वीणां मलिना रुदन्ती मल्लारिका यौवन दूनचित्ता ॥२६३

धनिरिगमध इति मल्लारिका ॥ ३२ ॥

(262-263) 'Mallari' lakshana.
(ஸ. 262-263) 'மல்லாரி' லக்ஷணம்.

देशकारी तु सम्पूर्णा षड्जन्यास ग्रहांशका ।
मूर्छना प्रथमा ज्ञेया वराटीमिश्रिताभवेत् ॥ २६४ ॥

उदाहरणम् ।

भर्त्रासमं केलिरसं सुकेशी सर्वाङ्गपूर्णा कमलायताक्षी ।
पीनस्तनी रुक्मतनुः सुवेशा संपूर्णचन्द्रानन देशकारी ॥

सरिगमपधनिस इति देशकारी ॥ ३३ ॥

(263-264) 'Deshakari' lakshana.
(ஸ. 263-264) 'தேசகாரி' லக்ஷணம்.

षड्जग्रहांशकन्यासा भूपाली कथिता बुधैः ।
मूर्छना प्रथमा यत्र सम्पूर्णा शान्तिके रसे
कैचित्तुरीयहीनेय औडवा परिकीर्तिता ॥ २६६ ॥

गौरद्युतिः कुङ्कुमलिप्तदेहा तुङ्गस्तनी चन्द्रमुखा मनोज्ञा ।
भर्तुः स्मरन्ती विरहेण दूना भूपालिकेयं रसशान्तियुक्ता ॥

सरिगमपधनिस इति भूपाली ॥ ३४ ॥

(266-267) 'Bhupali' lakshana.
(ஸ. 266-267) 'பூபாளி' லக்ஷணம்.

ग्रहांशन्यास ऋषभा सम्पूर्णा गुर्जरी मता ।
सप्तमी मूर्छना तस्यां बहुन्यास विमिश्रिता ॥ २६७ ॥

उदाहरणम् ।

श्यामा सुकेशी मलयद्रुमाणां मृदूल्लसत्पल्लव तल्पमध्ये ।
श्रुतिस्वराणां दधतीविभागं तन्त्रीमुखाद्दक्षिणगुर्जरीयम् ॥

रिगमपधनिसरि इति गुर्जरी ॥ ३५ ॥

(268-269) 'Gurjari' lakshana.
(க. 268-269) 'குர்ஜ்ஜரி' லக்ஷணம்.

टक्कःस्यात्तु त्रिधाषड्जः सम्पूर्णश्चादि मूर्छनः ।

उदाहरणम् ।

शय्यासु सुप्तां नलिनीदळानां वियोगिनीं वीक्ष्य विषण्णचित्तां ।
सुवर्णवर्णग्रहमागतःसन् सम्भाषते तां किल टक्कसंज्ञः ॥

सरिगमपधनिस इति टक्कः । इति पञ्चभार्यासहितो मेघरागः ॥ ३६ ॥

(270) 'Takka raga' lakshana
(க270) 'டக்க ராக' லக்ஷணம் upto this according to Hanuman Mate

कल्याणनाटो विज्ञेयः सम्पूर्णो रित्रयोमतः ।
पञ्चलयोपि कैश्चित्तु संप्रदिष्टो मनीषिभिः ॥ २७१ ॥

उदाहरणम् ।

कृपाणपाणिस्तिलकं ललाटे सुवेषवेषः समरे प्रचण्डः ।
स्मरन्प्रविष्टः किल रक्तवर्णः कल्याणनाटः कथितोमुनीन्द्रैः ॥

रिगमपधनिसरिअथवा सरिगमपधनिम, इति कल्याणनाटः ॥ ३७ ॥

(271-272) ' Kalyana nata

(க 271-272) ' கல்யாணநாட்ட' லக்ஷணம்

सारङ्गनाटः सम्पूर्णः सत्रयोत्तरमन्द्रजः ।

उदाहरणम् ।

वीणांदधाना दृढबद्धवेणी
सख्यासमं मञ्जुलवृक्षमूले ।
जाम्बूनदाभा च निषण्णदेहा
सारङ्गनाटा कथिता सुवेषैः ॥ २७३ ॥ अथवा

करधृतवीणा सख्यासहोपविष्टा च कल्पतरुमूले ।
दृढतरनिबद्धकबरी सारङ्गाभा सुरङ्गिणी प्रोक्ता ॥ २७४ ॥

सरिगमपधनिस इति सारङ्गनाटः ॥ ३८ ॥

(273—274) 'Saranganata' lakshana

(க, 273—274) சாரங்கநாட்ட (சாலங்கநாட்ட) லக்ஷணம்

देवगिर्याः स्वराः प्रोक्ताः सारङ्गसदृशा मताः ।

उदाहरणम् ।

नितम्बिनी श्यामतनुः प्रवृत्ततुङ्गस्तनी सुन्दरहारवल्ली ।
चित्रांबरा मत्तचकोरनेत्रा मदालसा देवगिरी मतेयम् ॥२७५॥

सरिगमपधनिस इति देवगिरी ॥ ३९ ॥

275— ' Devagiri ' lakshana

(க, 275) ' தேவகிரி ' லக்ஷணம்

सोरटी षाडवा ज्ञेया पञ्चमत्रयसम्मता ।
रिहीनाच समाख्याता कैश्चित्षड्जत्रयामता ॥ २७६ ॥

पीनोन्नतस्तनतटोत्तमहारवल्ली
कर्णोत्पलभ्रमरनादविलम्भचित्ता ।

यति प्रियान्तिक मतिश्लथबाहुवल्ली
सौराष्ट्रिका मदनमूर्तिविचारगौरा ॥ २७७ ॥

पधनि सगमप अथवा सगमपधनिस इति सोरटी ॥ ४० ॥

(276—277) 'Sorati' lakshana
(சு, 276—277) 'ஸோரட' (சுருட்டி) லக்ஷணம்

त्रिवणा साच विज्ञेया ग्रहांशन्यासधैवता ।
औडवा सा समाख्याता परिहीना प्रकीर्तिता ॥ २७८ ॥

उदाहरणम् ।

रम्भायाः सुतरोर्मूले निषण्णा पीतवर्णभाक् ।
तन्वङ्गी हारसंयुक्ता प्रियेण त्रिवणा मता ॥ २७९ ॥

धनिसगमध । इति त्रिवणा ॥ ४१ ॥

(278-279) 'Trivana' Lakshana
(சு. 278-279) 'த்ரிவணு' லக்ஷணம்

षड्जत्रया पहाडी स्यात् रिपहीना च गौरिवत् ।
छाया तैलङ्गदेशीया आलापे चौडवा मता ॥ २८० ॥

उदाहरणम् ।

वीणोपगायत्यतिसुन्दराङ्गी
रक्ताम्बरा मञ्जुकदम्बमूले
श्रीचन्दनाद्रौ स्थितिकारिणी सा
श्रीरागकान्ता कथिता पहाडी ॥ २८१ ॥

इति पहाडी ॥ ४२ ॥

(280-281) 'Pahadi ' lakshana
க (280-281) ' பஹாடீ ' லக்ஷணம்.

रागः पञ्चमको ज्ञेयः पहीनः षाडवो मतः ।
प्रथमा मूर्छना यत्र षड्जत्रयविभूषितः ।
केचिद्वदन्ति सम्पूर्णः श्रृङ्गाररसपूरकः ॥ २८२ ॥

उदाहरणम् ।

रक्ताम्बरो रक्तविशालनेत्रः श्रृङ्गारयुक्तस्तरुणो मनस्वी ।
प्रभातकाले विजयी च रत्यां सदा प्रियः कोकिलमञ्जुभाषी ॥

सरिगम धनिस अथवा - सरिगमपधनिस इतिपञ्चमरागः ॥ ४३ ॥

(282—283) 'Panchamaraga' lakshana.
(க, 282—283) 'பஞ்சம ராக' லக்ஷணம்.

वेलावल्याः स्वरैर्युक्तः शङ्कराभरणो मतः ॥ २८४ ॥
इति शङ्कराभरणम् ॥ ४४ ॥

(284) 'Sankarabharana' lakshana.
(க, 284) 'சங்கராபரண' லக்ஷணம்,

बडहंसे स्वरा ज्ञेयाः कर्णाटे कथिता गुधैः ॥ २८५ ॥
इति बडहंसः ॥ ४५ ॥

(285) 'Badahamsa' lakshana.
(க, 285) 'படஹம்ஸ' (பலஹம்ம்) லக்ஷணம்,

ललितावद्विभासस्तु रेवा गुर्जरिवत्सदा ॥ २८६ ॥

इति विभासः । इति रेवा ॥ ४६ ॥

(286) 'Reva' ragalakshana
(சு, 286) 'ரேவா' லக்ஷணம்.

देशाख्यसदृशा गेया कुडाई सर्वसम्मता ॥ २८७ ॥
इति कुडाई ॥ ४७ ॥

(28,7)' Kudayee' lakshana.
(சு287) 'குடாயீ' லக்ஷணம்,

कल्याणसदृशी गेया आभीरी सर्वसम्मता ॥ २८८ ॥
इति आभीरी ॥ ४८ ॥

(288) 'Abhiri' lakshana.
(சு, 288) 'ஆபீரீ' லக்ஷணம்,

मालश्री जयतश्रीश्च धानाश्री मारुका तथा ।
एषां श्रुतिस्वरग्रामजात्यादिनियमो न हि
नानादेशगतछाया देशी रागास्तु ते स्मृताः ॥ २८९ ॥

(289) 'Malasri' 'Jayatasri' 'Dhanasri' 'Maruka' and other Desi Ragas do not obey the laws of Sruti Swara, Grama, and Jati.

சு (289) மாளஸ்ரீ ; 'ஜயதஸ்ரீ ; தனுஸ்ரீ ; 'மாருகா' முதலிய தேசி ராகங்களுக்கு ச்ருதி, ஸ்வர, க்ராம், ஜாதி நியமம் இல்லை

इति श्रीलक्ष्मीश्वर सुत चतुरदामोतर विरचिते सङ्गीतदर्पणे

'रागाध्यायः' ॥

---

## 'अथ प्रकीर्णकाध्यायः'।

अथ गीतोपयोगित्वादालप्तिर्गमकादयः ।
निरूप्यन्ते मया सम्यक् लक्ष्यदृष्ट्या तु तत्वतः ॥ २९० ॥

रागालापनमालप्तिः प्रकटीकरणं मतम् ।
सापुनर्द्विविधा रागरूपकाभ्यां विशेषणात् ॥ २९१ ॥

(290-291) 'Alapana or Alapti' or exposition of the 'Raga' or mode defined; and its 2 kinds, namely.

(1) Ragalapti, the expansion of Raga without a composition

(2) Rupakalapti, that is expansion of portions of of a musical piece

(த 290-291) 'ஆலாபம் அல்லது ஆலப்தி' என்னும் ராக விஸ்தாரம்-- அதன் இருவகை;— (1) ராக ஆலப்தி (2) ரூபக ஆலப்தி

स्वस्थानकैश्चतुर्भिर्या क्रियतेरूपकं विना ।
सा रागालप्तिरुदिता रूपकक्षेपणोत्तरा ॥ २९२ ॥

रागोपवेशनं यत्र स स्थायीस्वर उच्यते ।
यश्चतुर्थस्वरस्तस्मात् स च द्व्यर्ध उदीरितः ॥ २९३ ॥

तस्मादधस्तने यत्तु चालनं क्रियते स्वरे ।
मुखचालस्सकथितः स्वस्थानं प्रथमं च तत् ॥ २९४ ॥

द्व्यर्धस्वरे चालयित्वा विन्यसेत्तद् द्वितीयकम् ।
स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ॥ २९५ ॥

द्व्यर्धद्विगुणयोर्मध्ये स्थिता अर्धस्थिताःस्वराः ।
अर्धस्थिते चालयित्वा न्यसनं तु तृतीयकम् ॥ २९६ ॥

द्विगुणं चालयित्वा तु स्थायिन्यासश्चतुर्थकम् ।
एभिस्थानैश्चतुर्भिस्तु रागालप्तिर्विधीयते ॥ २९७ ॥

इदमेवोच्यते गानं अनिबद्धं पुरातनैः ।

(292-297) 'Method of Raga-Alapana; its stages or 'swasthanas'.

சு. (292-297) ராக ஆலாபனம் செய்யும் முறை; அதில் 4 படிகள் அல்லது 'ஸ்வஸ்தானங்கள்' (சொந்த வீடுகள்).

रूपकस्थेन रागेण तालेन च विधीयते ॥ २९८ ॥

रूपकालप्तिरेषा तु द्विविधा कथिता बुधैः ॥ २९९ ॥
प्रतिग्रहणिकाख्याद्या भञ्जनी संज्ञिकापरा ।
विधाय स्थायमालप्ते रूपकावयवो यदि ॥ ३०० ॥

प्रतिगृह्येत सा प्रोक्ता प्रतिग्रहणिका बुधैः ।
भञ्जनी द्विविधा ज्ञेया स्थायरूपक भञ्जनात् ॥ ३०१ ॥

यदा तत्पदमानेन स्थायरूपकसंश्रयात् ।
नाना प्रकारः क्रियते सा ज्ञेया स्थाय भञ्जनी ॥ ३०२ ॥

तैः पदैस्तेन मानेन समग्रं रूपकं यदि ।
अन्यथा चान्यथा गायेदसौ रूपकभञ्जनी ॥ ३०३ ॥

इदमेवोच्यते लोके नेमशब्देन गायकैः ।

(298-303) Rupaka Alapti, its 2 kinds :—

(1) Pratigrahanika & (2) Bhanjani ; the 2 forms of Bhanjani. (1) Consists in improvising music ending in the particular phrase in the piece ; (2) Consists in changing the form of the phrase party or fully maintaining the chhaya or emotion.

(298·303) ரூபக ஆலப்தி—அதன் இருவகை—

(1) ப்ரதிக்ரஹணிகா (ஸ்வரம் பாடுதல்;, (2) பஞ்சனி (சங்கதிபோடுதலும், நிரவலும்)

वर्णालङ्कार सम्पन्ना गमकस्थायचित्रिता ॥ ३०४ ॥

आलप्तिः क्रियते तज्ज्ञैः बहुभङ्गिमनोहरा ।
स्वरस्य कम्पो गमकः श्रोतृचित्त सुखावहः ॥ ३०५ ॥

भेदाः पञ्चदशैवास्य कथितास्तिरिपादयः ।
लघिष्ठडमरुध्वान कम्पानुकृतिसुन्दरः ॥ ३०६ ॥

द्रुततुर्यांशवेगेन तिरिपः परिकीर्तितः ।
यदा द्रुततृतीयांश वेगःस्यात्स्फुरितस्तदा ॥ ३०७ ॥

द्रुतार्धमानवेगेन कम्पितं गमकं विदुः ।
द्रुतवेगेन लीनस्तु कम्पने गमको भवेत् ॥ ३०८ ॥

लघुवेगेन कम्पश्चेत् भवेदान्दोलितस्तदा ।
नाना प्रकारवक्रत्वं स्वरकम्यो यदा भवेत् ॥ ३०९ ॥

वेगाधिकस्तथा प्रोक्तो गमको वलिसंज्ञकः ।
त्रिभिन्नस्तु त्रिषुस्थानेष्वविश्रान्तघनस्वरः ॥ ३१० ॥

कण्ठे तु कोमलः कंम्पः ग्रन्थिलोवलिलक्ष्मयुक् ।

कुरुलो नाम गमकः तदा प्रोक्तो मनीषिभिः ॥ ३११ ॥

स्वरमग्रिममाहत्य निवृत्तिस्त्वाहतो भवेत् ।
उल्लासितः स गमको यस्स्वरानुत्तरोत्तरान् ॥ ३१२ ॥

क्रमाद्गच्छन् भवेत्कम्पो वैचित्र्याद्धृदयङ्गमः ।
प्लावितो गमकः प्रोक्तःप्लुतमानेन कम्पनम् ॥ ३१३ ॥

हृदयङ्गमहुङ्कारो गम्भीरोगुंफितोभवेत् ।
मुखमुद्रणसम्भूतो मुद्रितोगमकोभवेत् ॥ ३१४ ॥
स्वराणां नमनादुक्तो गमको नामिताभिधः ।
एतेषामेव भेदानां यदास्यान्मिश्रणान्मिथः ॥ ३१५ ॥

मिश्रितस्स तदा प्रोक्तो गमकःस्याद्विचक्षणैः ।

(304-315) Gamaks or Graces; its 15 forms.
(சு 304-315) கமகங்கள் 15 வகை.

स्थाया अपि भवन्त्यत्र रागस्यावयबात्मना ॥ ३१६ ॥

(316-317) Sthayas or kinds of musical phrases well described in other text-books; hance not dealt with herein.

(சு. 316-317) 'ஸ்தாயங்கள்' அல்லது பிடிகள். மற்ற நூல்களில் கண்டு கொள்க.

प्रसिद्धास्तद्विदां तेतु नोक्ता विस्तरभीतितः ।
रागाभिव्यक्तिशक्तित्वमनभ्यासेपि यध्द्वनेः ॥ ३१७ ॥

तच्छारीरमितिप्रोक्तं शरीरेण सहोद्भवात् ।
तारस्थाने भवेद्यस्य माधुर्यं स्निग्धता तथा ॥ ३१८ ॥

गाम्भीर्यं मृदुता रक्तिः पुष्टिः कान्तिरनुध्वनिः ।
तत्सुशारीरमित्युक्तं लक्ष्यलक्षणकोविदैः ॥ ३१९ ॥

अनुध्वानविहीनत्वं रूक्षत्वं त्यक्तरक्तिता ।
निस्सारता विस्वरता काकित्वं स्थानविच्युतिः ॥ ३२० ॥

कार्श्यं कार्कश्यमित्येतत्कुशारीरन्तु दूषणैः ।
विद्यादानेन तपसा भक्त्या वा पार्वतीपतेः ।
प्रभूतभाग्यविभवैः सुशारीरमवाप्यते ॥ ३२१ ॥

(317-321) 'Sarira' or musical voice defined; its good and fad features,

(சு 317 321) 'சாரீரம்' என்றால் என்ன ? அதன் குணங் களும் தோஷங்களும்

एतत्प्रसङ्गतो लक्ष्म गायनादेरथोच्यते ।
लयतालकलाभिज्ञो ग्रामरागादिभेदवित् ।
गीतं गायति यो नाम रञ्जकस्स तु गायकः ॥ ३२२ ॥

सुशारीरो भवेद्यस्तु ग्रहमोक्षविचक्षणः ।
रागरागाङ्गभाषादि भेदज्ञस्तालवित्तमः ॥ ३२३ ॥

प्रबन्धगाननिपुणो विविधालापकोविदः ।
गमकेषु च सर्वेषु स्थानत्रयलसद्गतिः ॥ ३२४ ॥

आयत्तकण्ठवान् शुद्धच्छायालगविशेषवित् ।
जितश्रमस्सावधानः सर्वदोषविवर्जितः ॥ ३२५ ॥

सुसम्प्रदायो गीतज्ञैः कथ्यतेगायनोत्तमः ।
गुणैः कतिपयैर्हीनो निर्दोषो मध्यमोमतः ॥ ३२६ ॥

(322-326) 4 grades of singers: Gayaka, Gayakotthama, Gayaka madhyama, Gayakadhama,
(சு 322-326) பாடகர்களின் 4 வகை: காயன, காயகோத்தம காயகமத்தியம, காயகாதமர்கள்

कैश्चिद्गुणैरुपेतोपि सदोषो गायकाधमः ।
सन्दष्टोद्धुष्टभीतादि दोषाः स्युः पञ्चविंशतिः ॥ ३२७ ॥

सन्दश्य दशनं गायेत् असौ सन्दष्ट उच्यते ।
उद्धुष्टो विरसोद्घोषः सीत्कारी सीत्कृतैर्मुहुः ॥ ३२८ ॥

भयान्वितस्तु यो गायेत् स भीतो गायनो भवेत् ।
शङ्कितस्तु बुधैरुक्तः त्वरया यस्तु गायति ॥ ३२९ ॥

कम्पितः कम्पितो ज्ञेयः स्वभावाद्गात्रशब्दयोः ।
करालोद्घट्टितमुखः करालो गायनो भवेत् ॥ ३३० ॥

विकलस्सतु यो गायेत् स्वरान्न्यूनाधिकस्मृतान् ।
काकक्रूरखः काकी विताली तालविच्युतः ॥ ३३१ ॥

दधानः कन्धरं मूर्ध्नि करभोमिहितो बुधैः ।
छागवद्वहनीं कुर्वन् उद्भटोधमगायकः ॥ ३३२ ॥

शिरालफालवदनग्रीवामुखविकारवान् ।
झोंबकः कथितस्तज्ज्ञैर्गायनस्सर्वतोऽधमः ॥ ३३३ ॥

तुम्बकी तुम्बकाकारोत्फुल्लगल्लस्तु गायनः ।
वक्रीकृत्य तु योग्रीवां गायेद्वक्री स उच्यते ॥ ३३४ ॥

गात्रं प्रसार्य यो गायेत् प्रसारी सतु गायनः ।
नेत्रे निमील्य यो गायेत् सतु प्रोक्तो निमीलकः ३३५ ॥

नीरसो रक्तिहीनो यः स प्रोक्तो विरसोऽधमः ।
यस्तुवर्ज्यस्वरं गायेत् सोपस्वर उदाहृतः ॥ ३३६ ॥

अव्यक्तवर्णं यो गायेत् अव्यक्तस्सनिगद्यते ।
स्थानत्रयंनशक्नोति गातुं गानक्रियासु यः ॥ ३३७ ॥

स्थानभ्रष्टस्सकथितो गीतज्ञैर्गायनाधमः ।
शुद्धच्छायालगौ रागौ मिश्रयन्यस्तुगायति ॥ ३३८ ॥

समिश्रकस्तथान्येषां रागाणामपि मिश्रणात् ।
स्थाय्यादिष्ववधानेन निर्मुक्तोऽनवधानकः ॥ ३३९ ॥

(327-339) The 25 Outstanding faults in Singing.
(சு 327-339) பாடுவதில் ஏற்படும் 25 தோஷங்கள்

शिक्षाकारोनुकारश्च रसिको रञ्जकस्तथा ।
भावकश्चेति गीतज्ञाः पञ्चधा गायनं जगुः ॥ ३४०

अन्यूनशिक्षणे दक्षः शिक्षाकारो मतस्सताम् ।
स्वबुध्यातिशयेनान्यच्छायामनुकरोतियः ॥ ३४१ ॥

अनुकारस्सकथितो द्वितीयोगायनो बुधैः ।
स्वयमेवरसाविष्टो रसिकोगायनोभवेत् ॥ ३४२ ॥

गानेन रञ्जयेद्यस्तु श्रोतॄन् गाता स रञ्जकः ।
गीतस्यातिशयोत्थानाद्भावकः परिकीर्तितः ॥ ३४३ ॥

340—343. Four types of singers
(சு. 340—343) நான்குவகைப் பாடகர்கள்.

एकल्यो यमलो बृन्दगायनश्चेति सत्रिधा ।
एक एव तु यो गायेत् असावेकल्यगायनः ॥ ३४४ ॥

सद्वितीयो यमलकः सबृन्दो बृन्दगायकः ।

344— Single double and group singers.
சு. 344— ஒருவர், இருவர், பலர் சேர்ந்து பாடும் பாடகர்கள்

रूपयौवन माधुर्यशालित्वमधिकोगुणः ॥ ३४५ ॥

345. The 3 necessary requirements of singers:—
(1) attractive personality (2) youthful stage in life.
(3) sweet voice.
சு, 345. பாடகர்களுக்கு முக்கியமான 3 குணங்கள்:—
(1) நல்லதோற்றம், (2) வாலிப வயது, (3) இனியகுரல்.

वाग्वर्णसमुदायस्तु मातुरित्युच्यते बुधैः ।
गेयं धातुर्द्वयोः कर्ता प्रोक्तो वाग्गेय कारकः ॥ ३४६ ॥

346— The 2 Component parts of musical Composition:—

(1) 'Matu' (the words) (2) 'Dhathu' (the tune)
சு—346— ஸங்கீத ஸாஹித்தியத்தின் 2 அம்சங்கள்:—
(1) 'மாது' (வார்த்தைகள்) (2) 'தாது' (வர்ண மெட்டு)

शब्दानुशासनज्ञान मभिधानप्रवीणता ।
छन्दःप्रभेदवेदित्वं अलङ्कारेषु कौशलम् ॥ ३४७ ॥

रसभावादिविज्ञानं सर्वदेशस्थितिज्ञता ।
लयतालकलाज्ञानं हृद्यशारीरशालिता ॥ ३४८ ॥

संङ्गीतशास्त्रनैपुण्यं प्रतिभाच सभाजयः ।
रागद्वेषपरित्यागः सान्द्रत्वमुचितज्ञता ॥ ३४९ ॥

प्रत्यग्रधातुनिर्माणमनुच्छिष्टार्थकल्पनम् ।
द्रुतगीतविनिर्माणं पाठान्तरविदग्धता ॥ ३५० ॥

इत्यादि गुणसपन्नश्रेष्ठो वाग्गेयकारकः ।

347—350— 'Vak-geya-kara ' (the highly qualified Composer of music) and his qualifications.

(சு. 347—350— 'வாக்கேயகாரர்' எனும் உயர்ந்த சாகித்ய கர்த்தாவின் லக்ஷணங்கள்.

धातोरतिशयं कुर्यात् मातुमन्दस्तु मध्यमः ॥ ३५१ ॥

अप्रगल्भः प्रबंन्धेषु भवेत्सोपि च मध्यमः ।
अन्यधातौ मातुकर्ता कुट्टिकारोऽधमोमतः ॥ ३५२ ॥

351—352— The lower ranks of comopsers
(சு. 351—352—) மத்தியம், அதம வாக்கேயகாரர்கள்.

इति श्रीमल्लक्ष्मीधरभट्टसुत चतुरदामोदर विरचिते
संङ्गीतदर्पणे, प्रकीर्णकाध्यायस्तृतीयस्समाप्तः ।

---

## अथ प्रबन्धाध्यायश्चतुर्थः प्रारभ्यते ।

---

स्वररागादिकं सर्वं गीतोपकरणं ततः ।
निरूपितं प्रधानत्वादथगीतं निरूप्यते ॥ ३५३ ॥

वाग्गेयकारेण कृतं शास्त्रलक्षणसंयुतम् ।
बद्धं धातुभिरङ्गैश्च निवद्धमभिधीयते ॥ ३५४ ॥

आलप्तिर्बन्धहीनत्वा दनिबद्धमितीरितम् ।

(353—354) Music of two kinds: (1) Nibaddha or Prabandha (built up by Dhatus and Angas as laid dawn (2) Anibaddha (free expatiation) or Alapa

(சு. 353—355) பாட்டில் இருவகை:— (1) நிபத்தம் அல்லது பிரபந்தம் (தாதுக்கள், அங்கங்கள் என்ற பிரிவுகளால் தொகுக்கப்பட்டது) (2) அநிபத்தம் (இஷ்டப்படி சஞ்சாரம் செய்தல்) அல்லது ஆலாபனை.

प्रवन्धो रूपकं वस्तु तस्य संज्ञात्रयं भवेत् ॥ ३९९ ॥ अथवा ।

गीतं च रूपकं वस्तु प्रबन्धो गेयमित्यपि ।
गीते पञ्चाभिधाः प्रोक्ताः लक्ष्यदृष्टया विचक्षणैः ३५६ ॥

चतुर्भिर्धातुभिश्चाङ्गैः यस्मादेष प्रयुज्यते ।
तस्मात्प्रबन्धः कथितः गीतज्ञैस्तालकोविदैः ॥ ३५७ ॥

धातुः प्रबन्धावयवः सचोद्ग्राहादिभेदतः ।
चतुर्धा कथितो भागस्त्वाद्य उद्ग्राहसंज्ञकः ॥ ३५८ ॥

आदावुद्गृह्यतेगीतं येनोद्ग्राहस्तदाभवेत् ।
मेलापको द्वितीयस्तूद्ग्राहध्रुवकमेलनात् ॥ ३९९ ॥

ध्रुवत्वाद्ध्रुवसंज्ञस्तु तृतीयो भाग उच्यते ।
आभोगस्त्वन्तिमो भागो गीतपूर्णत्वसूचकः ॥ ३६० ॥

355—360 The 4 dhatus or parts of a Prabandha:— 'Udgraha' (the beginning) (2) 'Melapaka' (Joining the 1st and 3rd dhatus) (3) 'Dhruva' (the certain or indispensable part) and (4) Abhoga (end)

(சு. 355—360) பிரபந்தத்தின் 4 தாதுக்கள் அல்லது பகுதிகள்:— (1) உத்க்ராஹம் (எடுப்பு) (2) மேளாபகம் (முதலாவது 3வது, பகுதிகளைச்சேர்ப்பது) (3) த்ருவம் (நிச்சயமான பகுதி) (4) ஆபோகம் (முடிவு).

ध्रुवाभोगान्तरे कैश्चित् धातुरुक्तोन्तराभिधः ।
सतु सालगसूडस्थरूपकादिषु दृश्यते ॥ ३६१ ॥

361— The 5th Dhatu called 'Antara' (in between) is found in certain prabandhas like Salagasudas between the 3 rd and 4th Dhatus.

(சு. 361) 'அந்தரா:' (இடையே) என்ற 5வது பகுதி 'சாலகசூடம்' முதலிய பிரபந்தங்களில் 3வது 4வது பகுதிகளுக்கிடையே வருகிறது.

चतुर्धातुस्त्रिधातुश्च द्विधातुरिति स त्रिधा ॥ ३६२ ॥

मेलापकाभोगयोस्तु क्वचित्क्वचिदभावतः ।

362— The 3 kinds of prabandhas with 4, 3 and 2 Dhatus respectively.

(சு. 362) 3 வகை பிரபந்தங்கள்:— 4, 3, 2, தாதுக்கள் கொண்டவை.

तालस्वरौ तु तत्पादौ शब्दस्तेनेति तेनकः ।
प्रकाशको मंङ्गलस्य पदमर्थप्रकाशकम् ॥ ३६३ ॥

पाटो वाद्योद्भवश्शब्दः बिरुदं तु गुणाभिधा ।

तालश्चचत्पुटादिः स्यात् स्वरास्सरिगमादिकाः ॥ ३६४ ॥

तत्तत्कार्यानुरूपेण तत्तत्स्थाने निवेशनम् ।

स्यान्निमेषोष्टकाष्ठाभिः निमेषैरष्टभिः कला ।
कलाद्वयाच्चतुर्भागः स एव त्रुटिरुच्यते ॥ ६३९ ॥

चतुर्भागद्वयेनैव बिन्दोरर्धं प्रकीर्तितम् ।
अणुद्वयाद्द्रुतः प्रोक्तः तद्द्वयाच्चलघुः स्मृतः ॥ ६४० ॥

लघुद्वयात्तु वक्रः स्यात् लत्रयेण प्लुतो मतः ।
इति ताळगतिः प्रोक्ता ताळज्ञैः पूर्वसूरिभिः ॥ ६४१ ॥

(638—641) The first 'Prana' of Tala— 'Kala'
(சு-638—641) தாளத்தின் முதல் பிராணமாகிய 'காலம்;

**इति कालोत्पत्तिः प्रथमः प्राणः ।**

तथा च रत्नाकरः। मार्गाःस्युस्तत्र चत्वारो ध्रुवश्चित्रश्चवार्तिकः ॥६४२॥

दक्षिणश्चेति तत्रस्यात् ध्रुवके मात्रिका कला ।
शेषेषु द्वेचतस्रोष्टौ क्रमान्मात्राकलाभवेत् ॥ ६४३ ॥

ध्रुवका सर्पिणी कृष्या पद्मिनी च विसर्जिता ।
विक्षिप्ताख्या पताका च मात्रास्यात्पतिताऽष्टमी ॥ ६४४ ॥

सशब्दातुध्रुवाज्ञेया सर्पिणी वामगामिनी ।
कृष्यादक्षिणतः पाता पद्मिनीस्यादधोगता ॥ ६४५ ॥

विसर्जिताबहिर्याता विक्षिप्ताकुञ्चनात्मिका ।
पताकातूर्ध्वगमनात्पतिताकरपातनात् ॥ ६४६ ॥

ध्रुवपातेप्रयोज्यास्ताः नावापादौ कदाचन ।
ध्रुवकापतिताचित्रे वार्तिकेत्वादिमे उभे ।
अन्त्ये द्वेच प्रयोक्तव्ये क्रमादष्टौचदक्षिणे ॥ ६४७ ॥

तथा च चूडामणिः । दक्षिणो वार्तिकश्चित्रो ध्रुवश्चित्रतरस्तथा ।
अथ चित्रतमश्चेति षण्मार्गाः शास्त्रसम्मताः ॥ ६४८ ॥

ध्रुवकादिकलाष्टौच मार्गे दक्षिणसंज्ञके ।
ध्रुवकासर्पिणीचैव पताका पतितातथा ॥ ६४९ ॥

चतस्रो वार्तिकेज्ञेया श्चित्रेथपुनरुच्यते ।
ध्रुवका पतिताचेति योजनीया विशेषतः ॥ ६५० ॥

ध्रुवे कलैका विज्ञेया शार्ङ्गदेवेन कीर्तिता ।
अथ चित्रतरे मार्गे कलाच द्रुतसम्मिता ॥ ६५१ ॥

मार्गे चित्रतमे ज्ञेया कलाकरजसम्मिता ।
तथा च मणिदर्पणः । दक्षिणो वार्तिकश्चित्रो ध्रुवश्चित्रतरस्तथा ॥

अथचित्रतमश्चैव षण्मार्गोऽत्रप्रकीर्तितः ।
[ चित्रतमश्चातिचित्रतमश्चैव प्रकीर्तितः इति वापाठः ]
चतुर्भागस्त्रुटि श्चैवानुत्रुटिर्घर्षण स्तथा ॥ ६५३ ॥

अनुघर्षणकश्चैव स्वर श्चापि प्रकीर्तितः ।
सर्वेषां मतमाश्रित्य मार्गा द्वादशधा कृताः ॥ ६५४ ॥

तेषां मार्गप्रभेदानां कलाभेदान्प्रचक्ष्महे ।
तदर्धार्धप्रभेदेन शास्त्रतस्संप्रदायतः ॥ ६५५ ॥

तत्र दक्षिणमार्गे तु मात्राष्टकमुदाहृतम् ।
वार्तिके तु चतुर्मात्रा श्चित्रमार्गो द्विमात्रकः ॥ ६५६ ॥

एकमात्रा चित्रतरेद्रुतश्चित्रतमे मतः ।
अतिचित्रतमे मार्गे ऽणुद्रुतः परिकीर्तितः ॥ ६५७ ॥

चतुर्भागे तदर्धास्या त्कलांशकलिकाकृतिः ।
त्रुटिस्तदर्धभागःस्यात्तदर्धंस्यादनुत्रुटिः ॥ ६५८ ॥

तदर्धं घर्षणेचस्यात्तदर्धं चानुघर्षणे ।
एतदर्धं स्वरे प्रोक्तम् सूक्ष्मतत्त्वार्थवेदिभिः ॥ ६५९ ॥

एकवृत्तिर्दक्षिणे स्यात् ततो द्वेद्वे प्रयोजयेत् ।
यदालक्ष्येण सहितं कमनीयन्तदाभवेत् ॥ ६६० ॥

(642—660) The 2nd Prana of Tala—'Marga;
(சு-642—660) தாளத்தின் இரண்டாவது பிராணமாகிய 'மார்க்கம்'

## इति मार्गः द्वितीयः प्राणः ॥

निश्शब्दा शब्दयुक्ताच क्रियाच द्विविधा मता ।
निश्शब्दाच कला प्रोक्ता चतुर्धा सा प्रकीर्तिता ॥ ६६१ ॥

आवापादिप्रभेदेन तल्लक्षणमथोच्यते ।
आवापश्चाथ निष्क्रामो विक्षेपश्च प्रवेशकः ॥ ६६२ ॥

निश्शब्देति चतुर्धोक्ता सशब्दापि चतुर्विधा ।
ध्रुवः शम्पा तथा तालः सन्निपात इतीरिता ॥ ३६३ ॥

पात: कलाच सा ज्ञेया तासां लक्ष्माभिधीयते ।
आवापस्तलहस्तस्योत्तानस्याङ्गुलिकुञ्चनात् ॥ ६६४ ॥

निष्कामोधस्तलस्यस्यादङ्गुलीनां प्रसारणम् ।
क्षेपोदक्षिणपार्श्वस्थोत्तानस्य प्रसृताङ्गुळेः ॥ ६६५ ॥

विक्षेपोधस्तलस्यस्यात् प्रवेशोङ्गुलिकुञ्चनं ।
ध्रुवोहस्तस्य पाटःस्यात् छोटिकाशब्दपूर्वकः ॥ ६६६ ॥

शम्पादक्षिणहस्तस्य तालो वामकरस्य तु ।
उभयोः सन्निपातः स्यात् तासां मार्गवशान्मितिः ॥ ६६७ ॥

(661—667) The 3rd prana of Tala—' Kriya '
(661—667) தாளத்தின் மூன்ருவது பிராணமுகிய ' க்ரியா '

## इति क्रिया तृतीयः प्राणः ॥

द्रुतोलघुर्गुरुश्चैव प्लुतश्चेति यथाक्रमं ।
चत्वार्यङ्गानि नृत्यज्ञैः कथितानि विचक्षणैः' ॥ ६६८ ॥

अणुद्रुतो द्रुतश्चेति विरामद्रुत लस्तथा ।
लविरामोगुरुश्चेति प्लुतश्चेति यथाक्रमम् ॥ ६६९ ॥

सप्ताङ्गानि क्रमात्ताळे ज्ञातव्यानिसदाबुधैः ।
अणुद्रुतो वातजातो द्रुतश्च जलसम्भवः ॥ ६७० ॥

---

(1) 11499 अंकितमातृकायां पत्रप्रांते लिखितमेतत् ।

समीरजलसम्भूतो दविरामोहि कथ्यते ॥ ६७१ ॥

लघुरग्निभवः प्रोक्तो लविरामोजलाग्निना ।
गुरु राकाशसम्भूतो दीप्तो धरणिसम्भवः ॥ ६७२ ॥

अणुद्रुते चन्द्रदेवः द्रुते शम्भुर्विधीयते ।
दविरामे कुमारःस्यात् लघौ देवी स्मृताबुधैः ॥ ॥ ६७३ ॥

लविरामे स्मृतो जीवो गुरौ गौरीयुतश्शिवः ।
दीप्तेत्रयो विरिञ्चाद्या देवतामुनिभिः स्मृताः ॥ ६७४ ॥

तित्तिरिश्चटकश्चैव बकश्चाषश्च कोकिलः ।
वायसः कुक्कुटश्चैव क्रमादुच्चारयन्त्यमी ॥ ६७५ ॥

अण्वाद्यक्षरकै र्ज्ञेयाः सन्तिसंज्ञान्तराण्यपि ।
अणुद्रुत श्चार्धचन्द्रः करजश्चार्धबिन्दुकम् ॥ ६७६ ॥

अर्धद्रुतश्चाणुसंज्ञं अङ्कुशश्च धनुः क्रमात् ।
अणावेतानि नामानि कथितानि विपश्चिता ॥ ६७७ ॥

बिन्दुकं व्यञ्जनंशून्यं द्रुद्रुतं चार्धमात्रकम् ।
सुवृत्तश्च तथाज्ञेयं आकाशश्च तथोत्तमम् ॥ ६७८ ॥

खं कूपं वलयं ज्ञेयं द्रुते नामान्यनुक्रमात् ।
व्यापकः सरलो हृस्वः शरोदण्डोलमात्रिकः ॥ ६७९ ॥

[2] द्यौर्लमेरुरिमाः संज्ञाः बाणाख्याः शास्त्रसंमताः ।
दीर्घोवक्रोद्विमात्रस्स्यात् पूज्योगोथकलाभिधः ॥ ६८० ॥

---

2. ‘लघोर्मेरुरिमाः’ इतिचपाठः

केयूरनूपुरौ हार स्ताटङ्कः कङ्कणोगुरुः ।
गुरोश्चयानि नामानि गुरुत्वात्तान्यपि ध्रुवम् ॥ ६८१ ॥

त्रिमात्रस्सामजं शृङ्गीप्लुतोदीप्तः प्लुतोभवेत् ।
त्र्यङ्गसामोद्भवं ज्ञेयं तारस्थानं प्लुते मतम् ॥ ६८२ ॥

अणुद्रुतं चातिसूक्ष्मघाते योज्यं विचक्षणैः ।
सूक्ष्मघाते द्रुतं पूर्णघाते लघुरिहोदितः ॥ ६८३ ॥

घातक्षेपो गुरुर्ज्ञेयो दीप्ते घातात्करभ्रमः[3] ।

3. अस्य पाठांतमरपि दृश्यते । तद्यथा । :— R.Kau 3, 118
अत्यल्पघातेऽणुर्ज्ञेयः सूक्ष्मघाते द्रुतोमतः । पूर्णघाते लघुः प्रोक्तो घातक्षेपौ गुरुर्मतः ॥ घातात्करभ्रमोयत्र प्लुतोज्ञेयोविचक्षणैः । इति

सार्धत्रिषट्द्वादशाष्टादशैर्वाद्योन्तरेङ्गुलैः ॥ ६८४ ॥

अर्धद्रुतो द्रुतलघुगुरुप्लुत इति क्रमात् ।
पञ्चलघ्वक्षरोच्चारमिता मात्रेह कथ्यते ॥ ६८५ ॥

अनया मात्रयात्रस्या लघुगुर्वादिकल्पना ।
एकमात्रोलघुः प्रोक्तो द्विमात्रोगुरु रुच्यते ॥ ६८६ ॥

त्रिमात्रस्तु प्लुतोज्ञेयो मात्रार्धं च द्रुतोमतः ।
द्रुतार्धमणुरेकःस्यात्प्रमाणं कथितं बुधैः ॥ ६८७ ॥

इहद्रुतमितिर्नोक्ता मार्गताळेष्वभावतः ।
देशीतालेषु विज्ञेया लघोरेव प्रमाणता ॥ ६८८ ॥

द्रुते विरामेणुर्ज्ञेयः लविरामे द्रुतो मतः ।
द्रुतोपरियदारेखा दविराम स्तदाभवेत् ॥ ६८९ ॥

लघूपरियदामात्रा (रेखा ?) लविरामः प्रकीर्तितः
एवं कालप्रमाणं स्यादङ्गानां तद्विचारयेत् ॥ ६९० ॥

विरामे तु विचारोयं कर्तव्यस्तालधारिभिः ।

**इत्यङ्गानि । चतुर्थः प्राणः ।**

(668—690) The 4th prana of Tala — 'Anga'
668—690) 'தாளத்தின் நான்காவது பிராணமாகிய 'அங்கம்'

समोऽतीतोऽनागतश्च विषमश्च ग्रहामताः ॥ ६९१ ॥

चत्वारः कथितास्ताळे सूक्ष्मदृष्ट्या विचक्षणैः ।
गीतादिसमकालस्तु समपाणिः समग्रहः ॥ ६९२ ॥

गीतादौ विहितेपश्चात् तालवृत्तिर्विधीयते ।
अतीताख्यो ग्रहोज्ञेयः सोवपाणिरितिस्मृतः ॥ ६९३ ॥
पूर्वं तालप्रवृत्तिः स्यात्पश्चाद्गीतादिरुच्यते ।
अनागतः सविज्ञेयः सएवोपरिपाणिकः [1] ॥ ६९४ ॥

आद्यन्तयोरनियमः विषमग्रहशब्दभाक् ।
तालोवितालोनुतालः प्रतितालश्चतुर्विधः ॥ ६९५ ॥

समग्रहो भवेत्तालो वितालोतीतकः स्मृतः ।
अनागतोनुतालः स्याद्विषमः प्रनितालकः ॥ ६९६ ॥

---

1. अतीतानगतग्रहलक्षणं एतत् संगीतरत्नाकरादि ग्रन्थस्थात् संप्रदायागताच्च भिद्यते ।

आदिमध्यावसानेषु प्रयोगं सूक्ष्ममाचरेत् ।

इति ग्रहाः पञ्चमः प्राणः ।

(691—697) The 5th prana of Tala — 'Graha'

(சு-691—697) தாளத்தின் ஐந்தாவது பிராணனாகிய 'க்ரஹம்'

चतुरश्रस्तथात्र्यश्रः खण्डोमिश्रस्तथैव च ॥ ६९७ ॥

सङ्कीर्णः पञ्च विज्ञेया जातयः पञ्चधा बुधैः ।
चतुर्वर्णै स्त्रिभिर्वर्णैः पञ्चवर्णैस्तथैव च ॥ ६९८ ॥

सप्तवर्णैश्च नवभिः जातयः क्रमशः स्मृताः ।
तथैव मात्राविज्ञेया क्रमशस्तालवेदिभिः ॥ ६९९ ॥

ब्राह्मण श्चतुरस्रः स्यात् तिस्रः क्षत्रिय एवच ॥ ७०० ॥

खण्डोवैश्य स्तथाशूद्रः मिश्रोज्ञेयो विचक्षणैः ।
संकीर्णजातिस्संकीर्णः कथितास्ताळवेदिभिः ॥ ७०१ ॥

(698—701) The 6th prana of Tala 'Jati'

(சு-698—701) தாளத்தின் ஆறுவது ப்ராணனாகிய 'ஜாதி'

इति जातयः षष्ठः प्राणः ।

द्विगुणद्विगुणौज्ञेयौ लक्ष्यदृष्ट्याविचक्षणैः ।
ध्रुवका सर्पिणी कृष्या पद्मिनी च विसर्जिता ।
विक्षिप्ताख्या पताकाच मात्रास्या त्पतिताष्टमी ॥ ७०२ ॥

सशब्दाच ध्रुवाज्ञेया सर्पिणी वामगामिनी ।
कृष्या दक्षिणतः पातात् पद्मिनीस्यादधोगता ॥ ७०३ ॥

विसर्जिता बहिर्याता विक्षिप्ताकुञ्चनात्मिका ।
पताकातूर्ध्वगमना त्पतिता करपातनात् ॥ ७०४ ॥

ध्रुवपाते प्रयोज्यास्ता नावापादौ कदाचन ।
लघौतु ध्रुवकाज्ञेया ध्रुवकापतितापुनः ॥ ७०५ ॥

गुरौ प्लुते क्रमाद्ज्ञेया ध्रुवकासर्पिणी तथा ।
कृष्याच कथिता तज्ज्ञैस्तिस्र एतामनीषिभिः ॥ ७०६ ॥

(701—706) The 7th prana of Tala '— Kala'
(சு-701—706) தாளத்தின் ஏழாவது பிராணமாகிய 'கலா'

## इति कलाः सप्तमप्राणः ।

क्रियानन्तरविश्रान्तिर्लयस्स त्रिविधोमतः ।
द्रुतोमध्योविलम्बश्च द्रुतः शीघ्रतमोमतः ॥ ७०७ ॥

द्विगुणद्विगुणौज्ञेयौ तस्मान्मध्यविलम्बितौ ।
मार्गभेदाच्चिरक्षिप्रमध्यभावोप्यनेकधा ॥ ७०८ ॥

लयोक्षरेपदेवाक्ये योसौ चात्रोपयुज्यते ।
तथाच प्रतिभाविलासः । कोलामलकबिल्वञ्चक्रमेण लययोजनम् ॥

मन्दोप्यमन्दागतय स्तालादीनां विचारयेत् ।

## इति लय अष्टमः प्राणः ।

लयप्रवृत्तिनियमो यतिरित्यभिधीयते ॥ ७१० ॥

(707—710) The 8th Prana of Tala —' Laya '
(சு-707—710) தாளத்தின் எட்டாவது பிராணமாகிய ' லயம் '

इति लया: । अष्टम:प्राण: ॥

समा स्रोतोगता चान्या मृदङ्गाच प्रकीर्तिता ।
पिपीलिकाच गोपुच्छा यतय: पञ्चधा स्मृता: ॥ ७११ ॥

आदिमध्यावसानेषु लयैकत्वे समा त्रिधा ।
लयत्रैध्यादादिमध्यावसानेषु यथा क्रमात् ॥ ७१२ ॥

चिरमध्यद्रुतलया तदास्रोतोगता मता ।
अन्या विलम्बमध्याभ्यां मध्यद्रुतवती परा ॥ ७१३ ॥

मृदङ्गास्याद् द्रुताद्यन्ता मध्यतश्चविलम्बभाक् ।
अपरास्यात् द्रुताद्यन्ता मध्येमध्यलयान्विता ॥ ७१४ ॥

अन्या विलम्बमध्यातु मध्याद्यन्ता तथामता ।
स्यादाद्यंन्तविलम्बातु द्रुतमध्या पिपीलिका ॥ ७१५ ॥

अपराभवेदाद्यन्तमध्या मध्यद्रुता परा ।
आद्यन्तयो विलम्ब: स्यात् मध्ये मध्यलयान्विता ॥ ७१६ ॥

द्रुतमध्यविलम्बास्यात् गोपुच्छा द्रुतमध्यभाक् ।
द्वितीयान्याभवेन्मध्यविलम्बितलयान्विता ॥ ७१७ ॥

(710—716) The 9th prana of Tala — 'Yati '
(சு-710—716) தாளத்தின் ஒன்பதாவது பிராணமாகிய 'யதி'

इति यतय: ॥ नवम: प्राण: ।

अङ्गादिकानां लिखनं प्रस्तार स्सोभिधीयते ।

इति प्रस्तारः । दशमः प्राणः ।

(710—718) Tne 10th prana of Tala, —' prastara '

(சு.710 - 718) தாளத்தின் பத்தாவது ப்ராணமாகிய ' பிரஸ்தாரம் '

तत्र प्रथमं मार्गताला उच्यंते ।

तथाचरत्नाकरः । यथाक्षरश्चद्विकलः चतुष्कल इति त्रिधा ।
चच्चत्पुटश्चाचपुटः षट्पितापुत्रकस्तथा ॥ ७१८ ॥

संपक्केष्टाक उद्धट्टोमार्गतालाः प्रकीर्तिताः ।
तालेचच्चत्पुटे ज्ञेयं गुरुद्वंद्वं लघुप्लुतम् ॥ ७१९ ॥

सद्योद्भवः शुक्लवर्णश्चचत्पुटोष्टमात्रिकः ॥ ऽ ऽ । ऽे ॥ इति चच्चत्पुटः ।
ताले चाचपुटेज्ञेयो भगणोगुरुरेव च ॥ ७२० ॥

वामदेव मुखाज्जातः षण्मात्रः पीतवर्णकः ॥ ऽ । । ऽ ॥ इति चाचपुटः ।
षट्पितापुत्रकेऽन्यस्त्रभेदे पलगुरू लपौ ॥ ७२१ ॥

अघोरमुखसञ्जातः श्यामो द्वादशमात्रिकः ॥ ऽे । ऽ ऽ । ऽे ॥

इति षट्पितापुत्रकः ।

प्लुतो गुरुत्रयंपश्च संपक्केष्टाकतालके ।
ईशानजो रक्तवर्णो मात्राद्वादशभिर्युतः ॥ ऽे ऽ ऽ ऽ ऽे ॥ इति संपक्केष्टाकः ।

गुरुत्रयसमायुक्तः उद्धट्टस्सोभिधीयते ।
तत्पूरुषास्यसंभूतोऽनेकवर्णः स्मृतो बुधैः ॥ ऽ ऽ ऽ ॥ इति उद्धट्टः ॥

चतुरश्रस्तथाऽत्र्यश्रः इति तालो द्विधा मतः ।
चच्चत्पुटश्चाचपुट इति नाम्नी तयोः क्रमात् ॥ ७२४ ॥

यथाक्षरश्चद्विकलश्चतुष्कल इति त्रिधा ।
प्रत्येकं तैर्नामगतैः गलैस्तत्र यथाक्षरैः ॥ ७२५ ॥

अयमेककलश्चच्चत्पुटेत्वन्त्यंप्लुतं विदुः ।
गुरुः कलात्रद्विकलेऽष्टावाद्येन्यत्र षट्कलाः ॥ ७२६ ॥

चतुष्कलौ तौद्विगुणौ ताळशास्त्रेसुसम्मतौ ।
षट्पितापुत्रकस्त्र्यश्रभेदः सोपि तथात्रिधा ॥ ७२७ ॥

यथाक्षरे विशेषोत्र प्लुतआद्यन्तयोर्भवेत् ।
संपक्केष्टाकोपि भेदः षट्पितापुत्रकस्य च ॥ ७२८ ॥

तद्वद्यथाक्षरः कार्यः प्लुतआद्यन्तयोर्भवेत ।
उद्घट्टोपित्र्यश्रभेदः स प्रस्तारे तथात्रिधा ॥ ७२९ ॥

युग्मश्चच्चत्पुटोज्ञेयो अयुग्मस्त्र्यश्र एव च ।
ओजोपि त्र्यस्र संज्ञःस्यात् संज्ञातुकथिता बुधैः ॥ ७३० ॥

उत्तरः पञ्चपाणिश्च षट्पितापुत्रके भवेत् ।

718 – 730 The angas of the marga talas
கு-718—730 மார்க்க தாளங்களின் அங்கங்கள்.

एषां पातकळायोगं श्रेयसेव्याहरामहे ॥ ७३१ ॥

आद्यवर्णैः पातकळा निश्शङ्कः पर्यभाषत ।
चच्चत्पुटेत्वेककले संशताशा यथा क्रमम् ॥ ७३२ ॥

यद्वाशताशता ताल शम्पावाद्विर्भवेदिह ।

॥ ऽ ऽ । डे ॥ ऽ ऽ । डे ॥ ऽ ऽ । डे ॥

सं श ता श ॥ श ता श ता ॥ ता श ता श

इत्येककलः चच्चत्पुटः ॥

अन्त्यं भवेद्द्वयं चाचपुटेऽप्यस्तिमुनेर्मतं ।

ऽ । । ऽ ॥ ऽ । । ऽ

श ता श ता ॥ ता श ता श

इत्येककलश्चाचपुटः

उत्तरे संततस्ताळः शतालौद्विरनन्तरम् ॥ ७३४ ॥

डे । ऽ ऽ । डे

सं ता श ता श ता

इत्येककलः षट्पितापुत्रकः ॥

संपक्वेष्टाकस्य कलाः षट्पितापुत्रकोदिताः ।
संनिपातस्तुनास्त्यत्र योनिवद् द्विकलोभवेत् ॥ ७३५ ॥

डे ऽ ऽ ऽ डे ॥

ता श ता श ता ॥

इत्येककलः संपक्वेष्टाकः ॥

उद्घट्टेऽपि सनिष्कामं शंपाद्वंद्वं प्रयोजयेत् ।

ऽ ऽ ऽ

नि श श

इत्येककल उद्घट्टः ॥

इति यथाक्षराः पञ्चमार्गताळाः ॥

---

अथद्विकलादि ।

नि शौ नि ताशप्रनि सं द्विकले युग्मकेमताः ॥ ७३६ ॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

नि श नि ता श प्र नि सं ।

इति द्विकलश्चच्चत्पुटः ।

नि शौ ताशौ नि समितिज्ञेयाश्चाचपुटे क्रमात् ।

ऽ ऽ ऽ ऽ ऽ ऽ

नि श ता श नि सं

इति द्विकलः चाचपुटः ॥

नि प्रताशनि तानिःश ताप्रनिः सं तथोत्तरे ॥ ७३७ ॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

नि प्र ता श नि ता नि श ता प्र नि सं ।

इति द्विकलःषट्पितापुत्रकः ॥

द्विकला चतुष्कलासंपक्वेष्टाकोद्धट्टयोनिवत् ।

इति द्विकलसंपक्वेष्टाकोद्धट्टौ ॥

अथ चतुष्कलाविधिः कथ्यते ।

आदावधिक आवापे क्षिप्त विक्षेपकांतरे ।
द्विकलापादभागः स्यात् पादभागश्चतुष्कले ॥ ७३८ ॥

इति चतुष्कल पञ्चमार्गताळाः ।

731—738 The kriyas for the marga talas·
சு-731—738 மார்க்கதாளங்களுக்கான கிரியைகள்.

प्रथमे पादभागे स्यात्करांगुल्याकनिष्ठया ।
तयाचाऽनामयाऽन्यत्र ताभ्यां मध्यमयातथा ॥ ७३९ ॥

तृतीयेस्याच्चतसृभिः तुर्येचच्चत्पुटस्यतु ।
ओजस्य पादभागेतु करांगुल्याकनिष्ठया ॥ ७४० ॥

पञ्चपाणौ कनिष्ठादिचतुष्केण कनिष्ठया ।
तर्जन्या च पृथक् पादभागषट्के क्रमात्कला ॥ ७४१ ॥

आवापादिः प्रयोक्तव्यो भाविपातस्थ पाणिना ।
पातयुक्ते पादभागे नाङ्गुल्या क्रियते कला ॥ ७४२ ॥

अन्यद्भेदलयं चाचपुटेऽप्यस्ति चतुष्कलात् ।
द्विगुण द्विगुणत्वेन षण्णवत्यधिकं क्रमात् ॥ ७४३ ॥

युग्मस्य ये त्रयोभेदा: षड्वा युग्मस्य कीर्तिता: ।
तेषामन्योन्यसंसर्गात् संकीर्णाबहवो मता: ॥ ७४४ ॥

अन्ये पश्चैव सकीर्णान् गांधर्वेऽपि जगुर्बुधा: ।
पञ्च सप्त नवापि स्यु: दशैकादशतत्कला: ॥ ७४५ ॥

तालाश्चत्वार इत्यन्ये चतुर्दशकलादिका: ।
चच्चत्पुटादि भेदैस्तु सन्ति खण्डाभिधा: परे ॥ ७४६ ॥

त एव सालगा ज्ञेया: प्रसिद्ध्यालक्ष्यवर्त्मनि ।
देशीतालप्रपञ्चेन तानपि व्याहरामहे ॥ ७४७ ॥

एतै: प्रकरणाख्यानि तालैर्यानिजगु र्बुधा: ।
तेषां तु प्रथमं ज्ञेयं मद्रकं ताल मुत्तमम् ॥ ७४८ ॥

अपरान्तं द्वितीयं स्यात् उल्लोप्यं च तत: परम् ।
छन्दकासारिते वर्धमानकं पाणिकं तथा ।
ऋचो गाथाश्च सामानि मिलितानि चतुर्दश ॥ ७५० ॥

मोक्षस्य साधनान्येव प्रयोज्यानि शिवस्तुतौ ।
लक्ष्यप्रयोजनाभावात् नप्रोक्तानि यतस्तत: ॥ ७५१ ॥

## इति मार्गतालप्रकरणं समाप्तम् ।

738—751 Other varieties of marga talas known as 'salages' and 'Sankirnas'

738—751 'சாலகம்' 'ஸங்கீர்ணம்' என்ற பலவகை மார்க்க தாளங்கள்.

---

## अथ देशीताल प्रकरणम् ।

श्रीकीर्तिविजयानन्दं पार्वतीलोचनोत्सवम् ।
राजचूडामणिं नत्वा तालं देशीगतं ब्रुवे ॥ ७९२ ॥

देशीतालस्तुलध्वादिमितया क्रिययामितः ।
यथाशोभं कांस्य तालध्वननादिकया मतः ॥ ७९३ ॥

पञ्चलघ्वक्षरोच्चारमिता मात्रेह कथ्यते ।
अनया मात्रयात्रस्यात् लघुगुर्वादिकल्पना ॥ ७९४ ॥

देशीतालेऽधिकाक्कापि यथाशोभं विधीयते ।
ग्रहणे मोक्षणे चैव लघोरेव प्रधानता ॥ ७९९ ॥

अत उक्तं लघो र्मानं त्यक्त्वा द्रुतगुरुप्लुतान् ।
द्रुतात्मकोऽपि तालः स्यात् लघुः कृत्यविधिर्मतः ॥ ७९६ ॥

ग्रहमोक्षान्वितः स्वेच्छावृत्तिरत्रविधीयते ।
तालः प्राणात्मकः प्रोक्तः सङ्गीताख्य शरीरिणः ॥ ७९७ ॥

तस्मात्सर्वप्रयत्नेन गीतादौ कालशोधनम् ।
सर्वेषामेव तालानां आदिगोयं लघुःस्मृतः ॥ ७५८ ॥

नामभेदेपिसन्त्यत्र समरूपास्त्वनेकशः ।
ताळास्तेषु रहस्यं यत् तद्वदामो निशम्यताम् ॥ ७९९ ॥

कालमानात्मनोभेदा द्भेदस्तेषु[1] विनिश्चितः ।
नामभेदो मुनेरिष्टस्तत्तद्विधिविधानतः ॥ ७६० ॥

---

1. तेष्वविनिश्चितः इति 11499 अङ्कितमातृकायां पाठः ।

केचिदत्र विरामान्ता स्ताळास्तेष्वस्तिसंशयः ।
किंरूपं सविरामस्य कःकालश्च क्रियास्तिका ॥ ७६१ ॥

तत्रोच्यते मया सम्यक् समाधानाय धीमताम् ।
रूपं नास्त्यपरूपत्वात् स्वातन्त्र्यान्नैव कालभाक् ॥ ७६२ ॥

अक्रियत्वात्क्रियाचापि तस्यशम्भुस्वरूपिणः ।
सप्रसिद्धः शम्भुवत्किन्तुद्रुतलघ्वंतगो भवेत् ॥ ७६३ ॥

यद्यदन्तर्गतः किन्तु तत्तदर्धप्रमाणभाक् ।
गुर्वादेश्चतुरस्रादेः खण्डयित्वानिवेशितः ॥ ७६४ ॥

यद्वा लघ्वादि खण्डानां आधिक्यमिह दृश्यते ।
तेनैषां खण्डतालत्वमभाषन्त पुरातनाः ॥ ७६५ ॥

द्रुतादिरचनाभेदात्तालभेदोप्यनेकधा ।
( गजलीलो हंसलीलो वर्णभिन्नस्त्रिभिन्नकः । )

752—766 General Principles of Desi Talas.
752—766 தேசி தாளங்களைப்பற்றிய பொது விதிகள்.

तालानामधुनातेषामुद्देशं संगिरामहे ॥ ७६६ ॥

तथाच रत्नाकरः । आदितालो द्वितीयश्च तृतीयश्च चतुर्थकः ।
पञ्चमो निश्शङ्कलीलो दर्पणः सिंहविक्रमः ॥ ७६७ ॥

रतिलीलः सिंहलीलः कंदर्पो वीरविक्रमः ।
रङ्गश्रीरङ्गचच्चर्यः प्रत्यंगोयतिलग्नकः ॥ ७६८ ॥

गजलीलो हंसलीलः वर्णभिन्नस्त्रिभिन्नकः ।
राजचूडामणी रङ्गद्योतो रङ्ग प्रदीपकः ॥ ७६९ ॥

राजतालो वर्णताल: सिह्मविक्रीडितोजय: ।
वनमाली हंसनाद: सिह्मनाद: कुडुक्कक: ॥ ७७० ॥

तुरङ्गलील: शरभलील: स्यात्सिह्मनन्दन: ।
त्रिभङ्गी रङ्गाभरणौ मण्ठक: कोकिलप्रिय: ॥ ७७१ ॥

निस्सारुक्कोराजविद्याधरश्च जयमङ्गल: ।
मल्लिकामोदविजयानन्दौ क्रीडाजयश्रियौ ॥ ७७२ ॥

मकरन्द: कीर्तिताल: श्रीकीर्ति: प्रतितालक: ।
विजयो बिन्दुमालीच समनन्दनमण्ठिका ॥ ७७३ ॥

अभिनन्दो नन्दनान्दी मल्ल कंकालकन्दुका: ।
एकतालीच कुमुद: चतुस्तालीच डोम्बुली ॥ ७७४ ॥

[1]दीपको तीक्ष्णको ढेङ्की विषमोवर्णमण्ठिका ।
अभङ्गो रायवेङ्कालो वसन्तोलघुशेखर: ॥ ७७५ ॥

प्रतापशेखरो झंपा [2]गजझंपश्चतुर्मुख: ।
मदन: प्रतिमण्ठश्च पार्वतीलोचनोरति: ॥ ७७६ ॥

लीलाकरण यत्याख्यो ललितो गारुगिस्तथा ।
राजनारायणाख्यश्च लक्ष्मीशो ललितप्रिय: ॥ ७७७ ॥

श्रीनन्दनश्च जनको वर्धनो रागवर्धन: ।
षट्तालश्चान्तरक्रीडा हंसोत्सवविलोकित: ॥ ७७८ ॥

गजोत्वर्णयति: सिह्म: करण: सारसस्तथा ।

1. 11499 अंकित मातृकायां एषोर्धो नदृश्यते । 2. जगझंपा इति वा पाठ: ।

चण्डतालश्चन्द्रकला लयस्कन्धा द्रुतालिका ॥ ७७९ ॥

[1]घत्ता द्वंद्वमुकुन्दौच कुविन्दश्च कलध्वनिः ।
गौरी सरस्वती कण्ठाभरणो भग्नसंज्ञकः ॥ ७८० ॥

राजतालो मृगाङ्कश्च राजमार्ताण्डसंज्ञकः ।
निश्शङ्कश्शार्ङ्गदेवश्चेत्येते सोढलसूनुना ॥ ७८१ ॥

देशीतालास्समादिष्टा विंशत्यभ्यधिकं शतम् ।

766—781 Desi talas described in Sangita Ratnakara 120 in number.

(அ-766—781) சங்கித ரத்னகரத்தில்கண்ட 120 தேசிதாளங்கள்.

। अथ मतान्तरे ।

अतोपि कतिचित्सन्ति देशीतालविशेषतः ॥ ७८२ ॥

प्रसिद्धालोकमार्गेषु कथ्यन्तेऽत्र नविस्तरात् ।
चित्रतालः कन्दुकश्च इडावान्सन्निपातकः ॥ ७८३ ॥

ब्रह्मतालश्चतुस्तालः कुम्भतालस्तथैव च ।
लक्ष्मी तालश्चार्जुनश्च कुण्डनाची ततः परम् ॥ ७८४ ॥

[2]सन्निश्चापि महा[2]सन्निः यतिशेखरसंज्ञकः ।
कल्याणपञ्चघातौच-चण्डतालो द्रुतालिका ॥ ७८५ ॥

[3]जगणोमण्ठकश्चैव एकताली ततः परम् ।
यतितालः सञ्चतालः तथाज्ञेयाष्टतालिका ॥ ७८६ ॥

---

1. 'मन्ता' इति 11499 अंकित मातृकायां पाठः ।
2. 'संनिः', 'महासंनिः' इति वापाठः ।
3. अयं श्लोकः 11499 अङ्कितमातृकायां नदृश्यते ।

पृथ्वी कुण्डलिकाज्ञेया पातालकुण्डली तथा ।
नीलोझोंपडकश्चेति [4]उद्दमस्तु ततः परम् ॥ ७८७ ॥

स्वर्णमेरुश्चक्रताळः चक्रमण्ठस्ततः परम् ।
कुल्लुरश्चाशेषताळः संयोगश्चतुरश्चकः ॥ ७८८ ॥

विद्याधरो मण्ठकश्च मन्मथोहंससूनुकः ॥ ७८९ ॥

शरभलीलो निश्शङ्को यूपोविष्णुर्मतान्तरे ।
कङ्कालरतिताळौ च महाचित्रतरः स्मृतः ॥ ७४० ॥

चित्रावर्तस्तुल्लतालः परिवर्तविवर्तनौ ।
अभङ्गशेखरोहंसो मृगाङ्कः कुमुदस्तथा ॥ ७९१ ॥

कलकण्ठश्चिलपुटः [5]सुदेवत्सस्ततः परम् ।
उत्सवो विजयश्चैव पद्माख्यश्च सुदर्शनः ॥ ७९२ ॥

द्विसप्ततिरिमे ताळाः कथितालक्ष्यदृष्टितः ।
अतः परं प्रवक्ष्यामि द्वात्रिंशन्मण्ठिकास्तथा ॥ ६९३ ॥

विजयस्सालगश्चैव प्रथमस्सरसस्तथा ।
कीलकः पदिमण्ठश्चरविचक्रौ तथोदितौ ॥ ७९४ ॥

विराजमण्ठकश्चैव धनञ्जयजयप्रियौ ।
श्रीरङ्गो रङ्गमण्ठश्च षण्मण्ठक इतीरितः ॥ ७९९ ॥

गीर्वाणमण्ठकश्चैव विचारप्रतिमण्ठकः ।
कल्याणमण्ठकमलौ विशालो वल्लभस्तथा ॥ ७९६ ॥

---

4. 'मुद्गमस्तु' इति च पाठः। 5. वासुदेवः इति च पाठः।

पुनर्भूश्च कलापश्च चित्रमण्ठस्ततः परम् ।
तारास्य प्रतिमण्ठश्च मुद्रितश्चकलापकः ॥ ७९७ ॥
वर्णो गम्भीरमण्ठश्च श्रीरङ्गोभिन्नमण्ठकः ।
कल्याणमण्ठकश्चैव सङ्कीर्णमण्ठकः परः ।
शतद्वयमिति प्रोक्तं चतुर्विंशतिसंयुतम् ॥ ७९८ ॥

781—798 Other talas according to other authorities
(சு-781—798) மற்ற நூல்களில் கண்ட தாளங்கள்.

ताळानां लक्षणं वक्ष्ये तेषां भूरिमताश्रितम् ।
[1]तथाच रत्नाकरः । लघ्वादि तालो लोकेसौ रासइत्याभिधीते ॥
॥ । ॥ **इति आदितालः ।**
दौ लो प्रोक्तो द्वितीयकः ॥ ० ० । ॥ **इति द्वितीयकः ।**
द्रुत द्रुतौ विरामान्तौ तृतीयं चप्रचक्षते ॥ ० ० ० ॥
**इति तृतीयः ।**
लघुद्वंद्वं द्रुतश्चैकश्चतुर्थं चप्रचक्षते ॥ । । ० ॥ **इति चतुर्थः ।**
ताळेपञ्चमके प्रोक्तद्रुतद्वंद्वं मनोरमम् ॥ ० ० ॥ **इति पञ्चमः ।**

---

1. 11499 अङ्कितमातृकायां ताळक्षलणारंभे कति चनाधिक श्लोकावर्तते । तेयथा :—अथदेशीताळा उच्यन्ते ।

अणुद्रतो भवेयत्रचित्रताळः प्रकीर्तितः ॥ ‿ ॥ इति चित्रताळः ॥
द्रुतेनत्वेकताळी स्यात्कथिता भरतादिभिः ॥ ० ॥ इत्ये कताळी ॥
विरामान्तद्रुतेनैव कम्मकः परिकीर्तितः ॥ ० ॥ इति कम्मकः ॥
' लघ्वादिताळोलोकेऽसौ ' इति श्लोकात्परं एताः श्लोकाश्चदृश्यन्ते । :—
लविरामश्च विज्ञेयो लघुशेखर संज्ञकः ॥ । ॥ इति लघुशेखरः ॥
पूज्यमेकं भवेयत्र करुणस्सतुकथ्यते ॥ ऽ ॥ इति करुणः ॥
प्लुतमेकं भवेयत्र सन्निपातस्स उच्यते ।
अयमेव बुधैः केश्चित् पडिम्म इति कीर्तितं ॥ ऽ ॥
इति सन्निपातः । पडिम्मश्च ॥

ताळे निश्शंकलीलाख्ये प्लुतौ द्वौ गद्वयंलघुः ।

॥ ऽे ऽे ऽ ऽ । ॥ **इति निश्शंकलीलः**

दर्पणे दद्वयंगश्च,

॥ ० ० ऽ ॥ **इति दर्पणः ।**

सिंह्वविक्रमसंज्ञके ॥

गत्रयं लपलोगः पो

॥ ऽ ऽ ऽ । ऽे । ऽ ऽे ॥ **इति सिंह्वविक्रमः ।**

रतिलीले लघूगुरू ।

। । ऽ ऽ ॥ **इति रतिलीलः**

लध्वन्तेद्दत्रयं सिंह्वलीले

॥ । ० ० ० ॥ **इति सिंहलीलः**

दौयगण स्तथा ।

कन्दर्पतालस्त स्यैव पर्यायस्या त्परिक्रमः ॥

॥ ० ० । ऽ ऽ ॥ **इति कन्दर्पतालः । परिक्रमश्च**

लघुद्रुतद्वयं चान्ते गुरुः स्याद्वीरविक्रमे ।

॥ । ० ० ऽ ॥ **इति वीरविक्रमः**

रङ्गश्चतुर्द्रुतोगश्च-

॥ ० ० ० ० ऽ ॥ **इति रङ्गतालः**

श्रीरङ्गस्सगणाल्लपौ ।

॥ ॥ ऽ । ऽे ॥ इति श्रीरङ्गः

विरामान्तद्रुतद्वंद्वा न्यष्टौलघुचचर्चरी ।

० ०̀ ० ०̀ ० ०̀ ० ०̀ ० ०̀ ० ०̀ ० ०̀ ० ०̀ । ॥

अथवा---

॥ ० ०̀ । ० ०̀ । ० ०̀ । ० ०̀ । ० ०̀ । ० ०̀ । ० ०̀ । ० ०̀ । ॥

इति चर्चरी

प्रत्यङ्गे मगणोलौद्वौ

॥ ऽ ऽ ऽ । । ॥ इति प्रत्यङ्गः

यतिलग्नो द्रुतोलघुः

॥ ० । ॥ इति यतिलग्नः

गजलीलो विरामान्त मुक्तं लघुचतुष्टयम् ।

॥ । । । ।̀ ॥ इति गजलीलः

हंसलीलो विरामान्तं लघुद्वयमुदाहृतम् ।

॥ । ।̀ ॥ इति हंसलीलः

वर्णभिन्नो द्रुतौ लोगः

॥ ० ० । ऽ ॥ इति वर्णभिन्नः

त्रिभिन्ने लगुरुप्लुताः ।

॥ । ऽ ऽे ॥ इति त्रिभिन्नः

राजचूडामणिर्दौद्वौ नगणश्चद्रुतौ लगौ ।

॥ 0 0 । । । 0 0 । ऽ ॥ इति राजचूडामणिः

मगणो लप्लुतौ रङ्गोद्योतो-

॥ ऽ ऽ ऽ । डे ॥ इति रङ्गोद्योतः

रङ्गप्रदीपकः ।

तो गप्लुतौ

॥ ऽ ऽ । ऽ डे ॥ इति रङ्गप्रदीपकः

-राजतालो गपौदौ च गलौप्लुतः ।

॥ ऽ डे 0 0 ऽ । डे ॥ इति राजतालः

त्र्यश्रोमिश्रोद्विधावर्णस्त्र्यस्रोलौदौलघुद्वयम् ।

॥ । । 0 0 । । ॥ इति त्र्यस्रवर्णः

मिश्रेद्रुतचतुष्काः स्युः विरामान्तास्त्रयः पृथक् ।

ततः पगौ दौ गलौ गः—

॥ 000̀ 000̀ 000̀ 000̀ डे ऽ00 ऽ । ऽ ॥

॥ इति मिश्रवर्णः

-चतुर स्रोऽपि दृश्यते ।

गलौ द्रुतौ गुरुश्चेति-

॥ ऽ । 0 0 ऽ ॥ इति चतुरस्रवर्णः

सिंह विक्रीडिते पुनः ।

लपौ गलौ पगौ लाद्रः पलौ पश्च-

॥ । डे ऽ । डे ऽ । ऽ डे । डे ॥ **इति सिंह विक्रीडितः**

जये पुनः ।

जोलघूद्रौ द्रुतौ पश्च-

॥ । ऽ । । । ० ० डे ॥ **इति जयतालः**

वनमाली चतुर्द्रुती ।

लघुर्दौद्रौ गुरुरिति-

॥ ० ० ० ० । ० ० ऽ ॥ **इति वनमाली**

लप्लुतौ द्रौद्रुतौप्लुतः ।

हंसनादः-

॥ । डे ० ० डे ॥ **इति हंसनादः**

-सिंहनादो यगणश्चलघुर्गुरुः

॥ । ऽ ऽ । ऽ ॥ **इति सिंहनादः**

कुडुकेद्रौद्रुतौलौद्रौ-

॥ ० ० । । ॥ **इति कुडुकः**

विरामान्तद्रुतद्वयात् ।

द्रुतौ तुरगलीलः स्यात्-

॥ ० ० ० ० ॥ **इति तुरगलीलः**

भवेच्छरभलीलकः ।

लौद्रौ चतुर्द्रुतीलौद्रौ-

॥ । । ० ० ० ० । । ॥ **इति शरभलीलकः**

सिंहनन्दनकः पुनः ।

तपौ लगौ द्रुतौ गौलः पलपा गोलघूततः ।

चत्वारोलघवोऽशब्दा:-

॥ ऽ ऽ । डे । ऽ O O ऽ ऽ । डे । डे ऽ । । ⌈ ⌈ ⌈ ⌈ ॥

इति सिंहनन्दनः ।

त्रिभङ्गीसगणाद्गुरुः ।

॥ । । ऽ ऽ ॥ इति त्रिभङ्गी

रङ्गाभरणतालेताल्लप्लुतौ-

॥ ऽ ऽ । । डे ॥ इति रङ्गाभरणः

मण्ठके पुनः ।

साच्चतुर्लघुनिश्शब्दं-

॥ । । ऽ ⌈ ⌈ ⌈ ⌈ ॥ इति मंठः

( यद्वाभाद्वावशब्दकौ । )[2]

॥ ऽ । । ऽ । । ऽ । । ॥ इति वा मंठः

( भाच्चतुर्लघु निश्शब्दं) )[2] भवेन्मुद्रितमंठके ॥

॥ ऽ । । ⌈ ⌈ ⌈ ⌈ ॥ इति मुद्रितमंठकः

मंठो नजौ लघुर्यद्वा-

॥ । । । । ऽ । । ॥ इति वा मंठः

प्रोक्ताः षडपराभिधाः ।

मंठरूपकवेलायां

इति दशविधो मंठः

---

2. धनुश्रिह्वान्तर्गतः अयंमागः संगीतरत्नाकरात् उद्धृतः

कोकिलाप्रियनाम्नितु ।

गलपाः स्युः-

॥ ऽ । ङे ॥ इति कोकिलप्रियः

-विरामान्तौलघूनिस्सारुकोभवेत् ।

॥ । ा ॥ इति निस्सारुकः

लघुर्गुरुर्द्रुतद्वंद्वं राजविद्याधरोभवेत् ।

॥ । ऽ ० ० ॥ इति राजविद्याधरः

सगण द्वितयं यत्र सतालोजयमंगलः ।

॥ । । ऽ । । ऽ ॥ इति जयमंगलः

मल्लिकामोदतालेतुलौद्वौ द्रुतचतुष्टयम् ।

॥ । । ० ० ० ० ॥ इति मल्लिकामोदः

विजयानन्दतालेतु लघुद्वंद्व गुरुत्रयम्-

॥ । । ऽ ऽ ऽ ॥ इति विजयानन्दः

क्रीडाद्रुतौ विरामान्तौ चण्डनिस्सारुकश्चसः ।

॥ ० ० ॥ इति क्रीडातालः चण्डनिस्सारुकश्च

जयश्रीरगणोलोगः

॥ ऽ । ऽ । ऽ ॥ इति जयश्रीतालः

दौ लौ लो मकरंदकः

॥ ० ० । । । ॥ इति मकरंदतालः

लपौ गलौ प्लुतः कीर्तिः-

॥ । डे ऽ । डे ॥ इति कीर्तिताल:

श्रीकीर्तिर्द्रौगुरूलघू ।

॥ ऽ ऽ । । ॥ इति श्रीकीर्तिताल:

लोद्रुतौप्रतिताल: स्यात्-

॥ । 0 0 ॥ इति प्रतिताल:

विजयेपगपालघु: ।

॥ डे ऽ डे । ॥ इति विजयताल:

गुर्वोर्मध्येतु चत्वारोबिंदवो बिन्दुमालिनी ।

॥ ऽ 0 0 0 0 ऽ ॥ इति बिन्दुमालिनी

समे लौ दौ विरामान्तौ-

॥ । । 0 0̀ ॥ इति समताल:

लघुर्दौ पश्चनन्दने

॥ । 0 0 डे ॥ इति नन्दनताल:

गुरुद्रुतप्लुतैः प्रोक्ता मंठिका

॥ ऽ 0 डे ॥ इति मंठिकाताल:

अन्यैर्लघुद्वयम् ।

॥ । । ॥ इतिवा मंठिकाताल:

विरामादिद्रुतौद्वौच मंठिकापरिकीर्तिता ।

॥ ò o ॥ **इत्यपि मंठिकातालः**

दीपको द ल गा द्वि र्द्विः

॥ o o । । ऽ ऽ ॥ **इति दीपकतालः**

लौ द्वौ गुरुरुदीक्षणः ।

॥ । । ऽ ॥ **इति उदीक्षणतालः**

रगणो ढेङ्किका कैश्चित् एष प्रोक्तस्तु योजनः ।

॥ ऽ । ऽ ॥ **इति ढेङ्किकातालः । योजनश्च ।**

द्विचत्वारो विरामान्ता द्रुतास्तुविषमे मताः ।

॥ o o o ò o o o ò ॥ **इति विषमः ।**

द्वौ लौ द्वौ दौ लघुर्दौ द्वौ कीर्तिता वर्णमण्ठिका ।

॥ । । o o । o o ॥ **इति वर्णमण्ठिका ।**

अभिनन्दो लघुद्वंद्वं द्रुतयुग्मं गुरुस्तथा ।

॥ । । o o ऽ ॥ **इति अभिनन्दनः ।**

लप्लुतौ [1]मगणोऽनङ्गः

॥ । ऽे ऽ ऽ ऽ ॥ **इत्यनङ्गः ।**

---

1. 'सगणः' इति रत्नाकरे

नान्दी लो दौ लघूगुरू ।

॥ । ० ० । । ऽ ऽ ॥ इति नान्दी

मल्लतालो विरामान्तद्विबिन्दुश्च चतुर्लघोः ।

॥ । । । । ० ० ॥ इति मल्लतालः

उक्तश्चतुर्धाकङ्कालः पूर्णः खण्डः समोऽसमः ।

चतुर्द्रुती गलौ पूर्णः

॥ ० ० ० ० ऽ । ॥ इति पूर्णकङ्कालः ।

खण्डो दौ द्वौ गुरुद्वयं ।

॥ ० ० ऽ ऽ ॥ इति खण्डकङ्कालः ।

समे गुरूद्वौ लध्वन्तौ

॥ ऽ ऽ । । ॥ इति समकङ्कालः ।

विषमे लाद्गुरुद्वयं ।

॥ । ऽ ऽ ॥ इति विषमकङ्कालः ।

इति चतुर्धा कङ्कालः ॥

कन्दुके लौ च सगणः

॥ । । । । ऽ ॥ इति कन्दुकः ।

द्रुतेनत्वेकतालिका ।

॥ ० ॥ इत्येकतालिका ।

कुमुदे लाद्द्रुतौ लोग:

॥ । ० ० । ऽ ॥ **इति कुमुदः ।**

चतुस्ताले गुरोः परे ।

त्रयो द्रुताः

॥ ऽ ० ० ० ॥ **इति चतुस्तालः ।**

डोंबुली तु द्विलघुः स्याद्विरामवान् ।

॥ । ो ॥ **इति डोंबुली**

अभङ्गे लप्लुतौ

॥ । डे ॥ **इति अभङ्गः ।**

रायवेङ्काले रगणाद्द्रुतौ ।

॥ ऽ । ऽ ० ० ॥ **इति रायवेंकालः**

वसन्तेन्मौ

॥ । । । ऽ ऽ ऽ ॥ **इति वसन्तः**

विरामान्तलघुना लघुशेखरः ।

॥ ो ॥ **इति लघुशेखरः**

प्रतापशेखरेदीप्ता द्विरामान्तद्रुतद्वयं ।

॥ डे ० ०̆ ॥ **इति प्रतापशेखरः**

झंपाताळे विरामान्तद्रुतद्वंद्वं लघुस्तथा ।

॥ ० ०̆ । ॥ **इति झंपातालः**

गजझंपे विरामान्तं गुररोरूर्ध्वं द्रुतलयम् ।

॥ ऽ ० ० ॆ ॥ इति **गजझंपः**

चतुर्मुखो जप्लुताभ्यां सएवोमानको[1] मतः ।

॥ । ऽ । डे ॥ **इति चतुर्मुखः । उमानकश्च ।**

दद्वयंगश्चमदनः

॥ ० ० ऽ ॥ इति **मदनः**

सो भो वा प्रतिमण्ठके ।

( कोल्लकोऽन्यैरयंप्रोक्तः )[2]

॥ । । ऽ ॥ **इति प्रतिमण्ठकः । अथवा** ॥ ऽ । । ॥

पार्वतीलोचने पुनः ।

मलपाद्यौ गुरूदौ द्वौ

॥ ऽ ऽ ऽ । डे ऽ ऽ ० ० ॥ इति **पार्वतीलोचनः**

रतिताळे लघुर्गुरुः ।

॥ । ऽ ॥ इति **रतितालः**

लीला दलौपः

॥ ० । डे ॥ इति **लीलातालः**

---

1. 'एवोन्मातृको' इति रत्नाकरे.
2. अयं पादः मातृकासु लुप्तः रत्नाकरादुद्धृत्ययोजितः ।

करणयत्यां द्रुतचतुष्टयं ।

॥ ० ० ० ० ॥ **करणयतिः**

ललिते द्वौ द्रुतौ लोगः

॥ ० ० । ऽ ॥ **इति ललितः**

गारुगिस्तुचतुद्रुती ।

विरामान्ताबुधैः प्रोक्ताः

॥ ० ० ० ०̀ ॥ **इति गारुगिः**

राजनारायणः पुनः ।

द्रुतौच जगणोवक्रः

॥ ० ० । ऽ । ऽ ॥ **इति राजनारायणः**

लक्ष्मीशे तुद्रुतद्वयम् ।

विरामान्तं लप्लुतौच

॥ ० ०̀ । ऽे ॥ **इति लक्ष्मीशः**

तालस्तु ललितप्रियः ।

ऊर्ध्वं लघुभ्यां रगणः

॥ । । ऽ । ऽ ॥ **इति ललितप्रियः**

स्यातां श्रीनन्दने भपौ ।

॥ ऽ । । ऽे ॥ **इति श्रीनन्दनः**

जनको नयसा वक्र:

॥ । । । । ऽ ऽ । । ऽ ऽ ॥ **इति जनकः**

वर्धनेद्रौ द्रुतौ लपौ ।

॥ ० ० । ङे ॥ **इति वर्धनः**

विरामान्तद्रुतौ बिंदुस्त्रिमात्रो रागवर्धनः ।

॥ ० ०̀ ० ङे ।

द्रुतैः षड्भिस्तु षट् ताळः

॥ ० ० ० ० ० ० ॥ **इति षट्ताळः**

अन्तरक्रीडातु कथ्यते ।

द्रुतत्रयं विरामान्तं

॥ ० ० ०̀ ॥ **इत्यन्तरक्रीडा**

हंसेसविरती लघू ।

॥ । ो ॥ **इति हंसः**

लघुप्लुतावुत्सवः स्यात्

॥ । ङे ॥ **इत्युत्सवः**

गो द्रौ दीसो विलोकिते ।

॥ ऽ ० ० ङे ॥ **इति विलोकितः**

गजे चतुर्लस्सविरामः

॥ । । । ो ॥ **इति गजः**

लौ दो वर्णयति र्भवेत्

॥ । । ० ० ॥ इति वर्णयतिः

सिह्मो लदौ लत्रयश्च

॥ । ० । । । ॥ इति सिह्मः

गुरुणाकरुणो मतः ॥

॥ ऽ ॥ इति करुणः

लघुर्द्रुतानां त्रितयं लघूद्वौ सारसो मतः ।

॥ । ० ० ० । । ॥ इति सारसः

द्रुतद्वयं लघु द्वंद्वंचण्ड ताले बभाषिरे ।

॥ ० ० । । ॥ इति चण्डतालः

मगणश्च लयो दीप्ता लघुश्चन्द्रकलाभिधे ।

॥ ऽ ऽ ऽ ਙे ਙे ਙे । ॥ इति चन्द्रकला

गलौ प्लुतत्रयं वक्रः प्लुतो बिन्दुत्रयं लये ।

॥ ऽ । ਙे ਙे ਙे ऽ ਙे ० ० ० ॥ इति लयतालः

[1]राद्द्रुतौ द्वौ गुरुः स्कन्दे-

॥ ऽ । ऽ ० ० ऽ ॥ इति स्कन्दतालः

---

1. रत्नाकरे असमाप्त्यर्र पादत्रयंदृश्यते । तद्यथा : -
अड्डताळीदो लघुद्वयं इयमेवोचिरेताळं केचित् त्रिपुट संज्ञया
॥ ० । । ॥ इत्यड्ड ताळी त्रिपुटश्च ।

घत्तादौद्वौलगौ भवेत् ।

॥ 0 0 । ऽ ॥ **इति घत्तातालः**

द्वंद्वः सतगणौ प्लुतः ।

॥ । । ऽ ऽ ऽ । ऽे ॥ **इति द्वंद्वतालः**

मुकुंदेतु लघो बिन्दुचतुष्टय मथोगुरुः ।

॥ । 0 0 0 0 ऽ ॥ **इति मुकुंदतालः**

कुविन्दके लघुर्बिन्दुद्वयं गुरुरथ प्लुतः ।

॥ । 0 0 ऽ ऽे ॥ **इति कुविन्दकतालः**

कलध्वनौ लघुर्द्वंद्वं गुरुर्लघु रथप्लुतः

॥ । । ऽ । ऽे ॥ **इति कलध्वनिः**

पञ्चभिर्लघुभि गौरी-

॥ । । । । । ॥ **इति गौरीतालः**

द्वौगुरू द्वौलघू द्रुतौ

ताले सरस्वतीकण्ठाभरणे शास्त्रसंमते ॥

॥ ऽ ऽ । । 0 0 ॥ **इति सरस्वतीकण्ठाभरण तालः**

भग्न ताले चतुर्बिन्दुर्नगणश्च विरामवान् ।

॥ 0 0 0 0 । । ो ॥ **इति भग्नतालः**

ताले राजमृगाङ्कऽपि द्रुतौ लघु रथो गुरुः ।

॥ ०० । ऽ ॥ इति राजमृगाङ्क तालः

गुरुर्लघु र्द्रुत स्ताले राजमार्ताण्ड संज्ञके

॥ ऽ । ० ॥ इति राजमार्ताण्डतालः

निश्शङ्क संज्ञके ताले लगुरू पगुरू गलौ ।

॥ । ऽ ३ ऽ ऽ । ॥ इति निश्शङ्कतालः

शार्ङ्गदेवे द्रुतद्वंद्वं लप्लुतौ गद्वयं लघुः ।

॥ ०० । ३ ऽ ऽ । ॥ इति शार्ङ्गदेवतालः

इति रत्नाकरः ।

अथ मतान्तरे :—

अणुद्रुतो भवेद्यत्र चित्रतालः प्रकीर्तितः ।

॥ ˘ ॥ इति चित्रतालः

द्रुतेनत्वेकताली स्यात् कथिता भरतादिभिः ।

॥ ० ॥ इत्येकताली

विरामान्त द्रुतेनैव कंदुकः परिगीयते ।

॥ ०̍ ॥ इति कन्दुकतालः

प्लुत मेकं भवेद्यत्र परिमण्ठस्स उच्यते ।

॥ ऽे ॥ इति परिमण्ठतालः

ताले निश्शंकलीलाख्ये प्लुतौद्वौ गद्वयं लघुः ।

॥ ऽे ऽे ऽ ऽ । ॥ इति निश्शंकलीलतालः

लघुद्रुतौ लघुश्चैव द्रुतद्वय मथो लघुः ।

द्रुत त्रयं लघु श्चेति ब्रह्मताले बभाषिरे ॥

॥ । 0 । 0 0 । 0 0 0 । ॥ इति ब्रह्मतालः

यतिलग्न द्वितीयाभ्या मिडावान् संप्रकीर्तितः ।

॥ 0 । 0 0 । ॥ इति इडावान्

द्रुत त्रयं लघुश्चैक श्चतुस्तालः प्रकीर्तितः ।

॥ 0 0 0 । ॥ इति चतुस्तालः

काम बाणद्रुतायत्र करजग्ख्य स्ततः परम् ।

दविरामो लघुश्चैको बिन्दु श्चार्धद्रुतो भवेत् ।

दविरामो लघुद्वंद्वं द्रुतो लघु विरामवान् ।

कुंभतालइति प्रोक्त स्तालविद्याविशारदैः ।

॥ 0 0 0 0 0 ˘ ȯ । 0 ˘ ȯ । । 0 ˈ ॥ इति कुंभ तालः

द्रुतद्वयं लघुश्चैक श्चार्धचन्द्रद्वयं तथा ।

क्रीडातालो द्रुत श्चैक लघुश्चा णुद्वयं तथा ।

दविरामो द्रुत श्चैको दविरामो लघुस्तथा ।

दद्वं लविरामश्च लक्ष्मीतालेबभाषिरे ।

॥ ००। ˘˘ ००० ० । ˘˘ ००० ० । ०० ॊ ॥ इति लक्ष्मीतालः

अर्जु नाख्ये क्रमात्ताले द्रुतोलश्चद्रुतः शरः ।

द्रुत त्रयं लघुश्चैकः तश्चैव विरामवान् ।

॥ ०।०।०००।ॊ ॥ इति अर्जुनतालः

दोलश्च लविरामश्च दोलघु लविरामकः ।

शरोद्रुतो लघुश्चैको विरामो लद्रुतोमतः ।

शरो विरामसहितः कुण्डनाचिं प्रचक्षते ।

॥ ०। ॊ०। ॊ।०। ॊ० ॊ ॥ इति कुण्डनाचीतालः

द्रुतोलघु र्द्रुतो लश्च दलघू दद्वयं तथा ।

लघुर्द्रुतत्रयं लश्चदचतुष्कं लघुर्भवेत् ।

कुल्तालइति प्रोक्तस्तालविद्याविशारदैः ।

॥ ०।०।०।००।०००।००००। ॥

इति कुल्तालः (गुल्तालः)

[1]रच्चा ताले लघुः प्रोक्तो दविरामः प्रकीर्तितः ।

॥ । ॊ ॥ इति रच्चातालः

द्रुत लयं लघुश्चैको दद्वयश्च लुघुद्वयम् ।

सन्नि ताले क्रमाज्ज्ञेयं सर्वनृत्येषु संमते ।

॥ 0 0 0 । 0 0 । । ॥ इति सन्नितालः

महा सन्नि स्तु विंज्ञेया द्रुत त्रयलघुद्वयम् ।

द्रुतश्शरो द्रुतोलश्च द्रुतोलत्रय संयुतः ।

केचिदेनं प्रशंसन्ति ग्रह मात्रायुतो भवेत् ।

॥ 0 0 0 । । 0 । 0 । 0 । । । ॥ इति महासन्निः

यति शेखर तालेतु द्रुतश्शर युग द्रुतौ ।

लघु द्रुतौ शरद्वंद्वं वदन्ति चमनीषणः ।

॥ 0 । । 0 0 । 0 0 । । ॥[2] इति यतिशेखरतालः

गद्वयं लत्रयं ज्ञेयं निश्शब्दं लत्रयं ततः

---

1. 'रश्चा' 'लश्चा' इति च पाठ भेदौ.

2. अस्य ताळस्य सप्तमाष्टमाङ्गभूतद्रुतयोः स्थाने एक एव द्रुतः मातृकान्तरेदृश्यते ।

पञ्चघातस्सविज्ञेयः प्रसिद्धस्तालवेदिनाम् ।

॥ ऽ ऽ । । । ꜀ ꜀ ꜀ ॥ इति **पञ्चघातः**

जीवद्वयं भवेद्यत्र नगणश्च विरामवान् ।

इतिवा पञ्चघातः स्याल्लयत्रितयसंयुतः ॥

॥ ऽ ऽ । । ो ॥ इति **वा पञ्चघातः**

ताळे कल्याणसंज्ञेतु तृतीयोऽर्धद्रुतो भवेत् ।

विंदुर्विरामोऽर्धचन्द्रः प्रान्तेगारुगिरुच्यते ॥

॥ o o ȍ ‿ ȍ ‿ o o o ȍ ॥ इति **कल्याणताळः**

समताळो द्रुतौद्वौ च द्रुतो लघुरतः परम् ।

सचक्रीडातु साज्ञेया चन्द्रताळः प्रकीर्तितः ॥

॥ । । o ȍ o o o । । o ȍ ॥ इति **चन्द्रताळः**

तत्रसूडादि ताळाः—

ध्रुवो मठ्ठो रूपकश्च झंपाताळतृतीयकौ ।

अड्डुताळश्चैकताळी सूडताळाभवन्त्यमी ॥

रतिताळे लगौ ज्ञेयौ लोके ध्रुवकसंज्ञः

॥ । ऽ ॥ **इतिध्रुवः**

लघु गुरु र्लघुश्चैव जगणो मण्ठ इष्यते ।

॥ । ऽ । ॥ **इति जगणमण्ठ :**

क्रीडा द्रुतौ विरामान्तौ रूपकंच प्रचक्षते ।

॥ ० ०̀ ॥ **इति रूपकताळ:**

विरामान्तद्रुतद्वंद्वात् लघुनैकेनझंपक: ।

॥ ० ०̀ । ॥ **इति झंपताल:**

[1]दौ लौ भवेदष्टताली अड्डताळीच सा भवेत् ।

॥ ० ० । । ॥ **इति अड्डताळ:**

द्रुताद् द्रुतौ विरामान्तौ तृतीयंच प्रचक्षते ।

॥ ० ० ०̀ ॥ **इति तृतीय:**

लोदश्च लविरामश्च प्रसिद्धाचैकताळिका

॥ । ० ।̀ ॥ **इति एकताळ:**

**इति सूडादिताळा: ।**

अथ ध्रुवपदताळा उच्यन्ते ।

लघुर्द्रुतद्वयं लश्च यतिताळ: प्रकीर्तित: ।

॥ । ० ० । ॥ **इति यतिताळ:**

लोद्रुतौ प्रतिताळ: स्यात्

॥ । ० ० ॥ **इति प्रतिताळ:**

1. दोलौ भवेदड्डताळी मोक्षताळी च सा भवेत् इति पाठांतरं

सञ्चे द्रुतलघुलयं ।

॥ ०।।।॥ इति सञ्चताळः

समे लोद्रौ विरामान्तौ मुखरीति[3] निगद्यते ।

॥ । ० ०̀ ॥ इति समताळः मुखरी च

अणु[4]द्रुतद्वयं दश्च लघुस्स्यादष्टताळिका ।

॥ ˘ ˘ ० । ॥ इति अष्टताळिका

गुरुद्वयं लघुश्चैवप्लुतोलघुगुरुस्तथा ।

द्रुतद्वयंलघुद्वंद्वं[5] लघुप्लुत इति क्रमात् ॥

शरो दीप्तोगुरुश्चैव लघुयुग्मं ततःपरं ।

चत्वारो लघवोऽशब्दाः प्रान्तेस्युःसिह्मनन्दने ॥

॥ ऽ ऽ । ऽे । ऽ ० ० ऽ ऽ । ऽे । ऽे ऽ ॥ ꜒ ꜒ ꜒ ꜒ ॥ इतिसिह्मनन्दनः

तपौ मलौ पलौ गः पो भोऽशब्दं लचतुष्टयं ।

वेदद्रुतालघुद्वौत्यौजपौलौ सगणस्तथा ।

---

3. 'मुखचारी' इति पाठांतरम् ।

4 'अणुर्द्रुतद्वयं' इति पाठांतरम् ।

5. 'गुरुद्वंद्वं' इति स्यात् मातृकासु सर्वासु गुरोःचिह्नितत्वात् ।

अशब्दंलचतुष्कंस्यात् पृथ्वीकुण्डलिसंज्ञके[6] ।

॥ऽऽ।डेऽऽऽ।डे।।ऽडेऽ।।ᒥᒥᒥᒥ00

00।।ऽऽ।।ऽऽ।ऽ।डेडे।।।।ऽᒥᒥᒥᒥ॥

इति पृथ्वीकुण्डली

इन्द्रकुण्डलिताळेतु सलपा मलपा लगौ ।

पमपाः पौ लपौ पस्तः प्लुतौतौतगणस्तथा ॥

---

6. 11499 अङ्कितमातृकायां पाठान्तरं यथा ।

चच्चत्पुटः स्युर्मगणः लपौ लघुगुरुर्भवेत् ।

पगौ लघुद्वयं ज्ञेयं अशब्दं लचतुष्टयम् ॥

वेदद्रुताः क्रमाद्ज्ञेया लद्वयं तगणस्तथा ।

प्लुतौ जगणपौतौ च सगणश्च तथाभवेत् ॥

अशब्दं लचतुष्कं स्यात् पृथ्वीकुण्डलिसंज्ञके ।

॥ऽऽ।डेऽऽऽ।डे।ऽडेऽ।।ᒣᒣᒣᒣ0000

।।ऽऽ।डेडे।ऽ।डेऽऽ।ऽऽ।।।ऽᒣᒣᒣᒣ॥ इति पृथ्वीकुण्डली

अस्मात् श्लोकात्परं हनुमन्मतानुसारि वृश्चिककुण्डलि ताळ लक्षणं दृश्यते । तद्यथा :—

' अथ हनुमन्मते लिख्यते । नद्वयं तगणश्चैव नगणो यगणस्तथा ।

मगणः सगणश्चैव भद्वयं यगणो भवेत् ॥

भगणद्वयसंयुक्तः यगणो लघुरेव च ।

जगणो लघुचत्वारो निश्शब्दाः कथिताबुधैः ॥

वृश्चि ताळे स संक्षेपः कथितः पिङ्गळेनच ।

॥।।।।।।ऽऽ।।।।।ऽऽऽऽऽ।ऽऽ।।ऽ।।ऽऽ

ऽ।।ऽ।।।ऽऽ।।ऽ।ᒣᒣᒣᒣ॥ इति वृश्चिक कुण्डली

लपौतः प्लुत लघुगाः नगणो गुरुरेव च ।

चत्वारो लघवोऽशब्दाः प्रान्ते ज्ञेयाविचक्षणैः[7] ॥

॥ । । ऽ । डे ऽ ऽ ऽ । डे । ऽ डे ऽ ऽ ऽ डे डे डे । डे डे ऽ ऽ ।

डे डे ऽ ऽ । ऽ ऽ । ऽ ऽ । । डे ऽ ऽ । डे । ऽ । । । ऽ

ᒥ ᒥ ᒥ ᒥ ॥ **इति इन्द्रकुण्डली**

विष्णुताळेतुनगणः ततश्च तगणोभवेत्

ततो जगणकोज्ञेयस्तगणस्सगणस्तथा

रगणो यगणोज्ञेयः प्रान्तेतुमगणो भवेत् ।[8]

॥ । । । ऽ ऽ । । ऽ । ऽ ऽ । । । ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ

**इति विष्णुतालः**

---

7, पाठांतरं यथा । कुण्डली चेन्द्रलोकाख्ये सगणश्च लघुःप्लुतः ।

मगणो यलयंलश्च प्लुतो (लोपौ) गुरुद्वयम् ।

लघुर्गुरुद्वयं लौचप्लुतो गौ लघुरेवच ।

प्लुतोजगणसंज्ञश्च सगणोलचतुष्टयं ।

अशब्दंक्रमतोज्ञयं सर्व लोकमनोहरम् ॥

॥ । । ड । डे ऽ ऽ ऽ । ऽ । - - ऽ ऽ डे । डे डे ऽ ऽ । ऽ ऽ । । डे ऽ ऽ ।

डे । ऽ । । । ऽ ᒥ ᒥ ᒥ ᒥ ॥ **इति इन्द्रलोककुण्डली**

8. अस्यपाठांतरंयथा ।

विष्णुताले तु नगण : ततश्च मगणो भवेत् ।

ततो जगणलो ज्ञेयस्तगणस्सगणस्तथा ॥

रगणो यगणोज्ञेय : प्रान्ते तु मगणो भवेत् ।

। । । ऽ । । । ऽ । । ऽ ऽ । । । ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ ॥ **इति विष्णुताळ :**

पातालकुण्डलीताले शरो दीप्तो गुरुस्तथा ।

लपौ गलौ गपौ लश्च पौ गौ पौ मगणः प्लुतः ॥

लगौ गलौ पगौ लौच मगणो लप्लुतौ तथा ।

द्रुतद्वयं लघुद्वंद्वं प्रान्ते व्यापकयुग्मकम् ॥[1]

॥ । डे ऽ । डे ऽ । ऽ डे । डे डे ऽ ऽ डे डे ऽ ऽ ऽ डे । ऽ ऽ । डे ऽ ऽ

। । ऽ ऽ ऽ । डे ० ० । । । । ॥ **इति पातालकुण्डली**

दविरामो द्रुतद्वंद्वं लविरामश्च कीर्तितः ।

विलंबेना ष्टताली स्यात् लक्ष्यमार्गप्रवर्तिता ॥

॥ ०̀ ० ० ।̀ ॥ **इति विलंबलये अष्टताली**

यतिलग्नो द्रुतोलश्च लक्ष्यमार्गेप्रवर्तितः ।

॥ ० । ॥ इति **यतिलग्नः**

---

1. अस्य पाठान्तरं यथा :

पातालकुण्डलीताले शरो दीप्तो गुरुस्तथा ।

लघुप्लुतौ गुरुश्चैकः शरः पूज्यः प्लुतो भवेत् ॥

शरो दीप्तः प्लुतश्चेति ततो जीवत्रयं भवेत् ।

प्लुतो गुरुद्वयं यश्च लगुरू लप्लुतो भवेत् ॥

भगणो भगण श्चैव लघुर्दीतश्च दद्वयम् ।

ततो लघुः प्रयोक्तव्यो विद्वद्भिः परिकीर्तितः ॥

॥ । डे ऽ । डे ऽ । ऽ ढे । डे डे ऽ ऽ ऽ डे ऽ ऽ । ऽ ऽ । ऽ । डे ऽ । । ऽ ऽ ऽ । डे ० ० । ॥

इति **पातालकुण्डली**

वेदद्रुतं विरामान्तं गारुगिश्च प्रचक्षते ।

॥ ० ० ० ०̀ ॥ इति **गारुगिः**

लघुत्रयं विरामान्तं झोंबडः परिकीर्तितः ।

॥ ० ० ०̀ ॥ इति **झोंबडः**

[1]नील झोंबडतालेतु तादशब्दो गुरुस्तथा ।

लावणूदौ विरामान्तावेतल्लक्षणमीरितम् ॥

॥ ऽ ऽ । ⌐ ऽ । । ◡ ◡ ० ०̀ ॥ इति **नीलझोंबडः**

[2]तादशब्दो लघुर्गश्च विरामान्तं द्रुतलयम् ।

लोऽणू विरामदोलः स्यात् अथवानीलझोंबडः ॥

॥ ऽ ऽ । ⌐ ऽ ० ०̇ ०। ◡ ◡ ०̀ । ॥ इति **वा नीलझोंबडः**

---

1. अस्य पाठान्तरंयथाः—

नील झोंबडतालेतु तगणश्च विधीयते ।
अशब्दो लघुरेकः स्यात् गुरुरेकोद्रुतद्वयम् ॥
लद्वयञ्चक्रमाद्ज्ञेयं अर्धचन्द्रद्वयं भवेत् ।
क्रीडातालेन संयुक्त रञ्जकत्वं तदा भवेत् ।
॥ ऽ ऽ । ⌐ ऽ ० ० । । ◡ ◡ ० ०̀ ॥ इति **नीलझोंबडः**

2. अस्य पाठान्तरं यथाः—

गौलो लघुरशब्दः स्यात् गोदौ दश्च विरामवान् ।
लोऽणुद्रुतद्वयंदश्च लविरामः प्रकीर्तितः ।

[3]निउद्दंमे द्रुता: पञ्च विरामान्ता स्तु गारुगि: ।

॥ 0 0 0 0 0̀ 0 0 0 0 0̀ ॥ इति **निउद्दंम:**

लगौ द्रुतलयं त्रि: स्यात् लोदौ लपगदा दलौ ।

पगौदौलपगा: प्रोक्ता: गारुगिश्चतृतीयक: ॥

द्रुतो लघुर्लघुर्गश्च स्वर्णमेरु[4] रयं मत: ।

॥ । ऽ 0 0 0 । ऽ 0 0 0 । ऽ 0 0 0 । 0 0 । ड़े ऽ 0
0 । ड़े ऽ 0 0 । ड़े ऽ 0 0 0 0̀ 0 0 0̀ 0 । । ऽ ॥ इति **स्वर्णमेरु:**

---

ततो लघु: प्रयोक्तव्य: इति व नीलझोंबड: ॥

॥ ऽ ऽ । ┌ ऽ 0 0 0̀ । ‿ ‿ 0 ┌ । ॥ इति **वानीलझोंबड:**

3. अस्य पाठान्तरं यथा:—

ती उद्दमे द्रुता: पञ्च विरामान्ता: प्रचक्षते ।
तत: परं गारुगि: स्यात् तदाजनमनोहरम् ॥

॥ 0 0 0 0 0̀ 0 0 0 0 0̀ ॥ इति **तीउद्दंम:**

4. अस्य पाठान्तरं यथा:—

मेरौ कनकसंज्ञेतु लगुरूच्चद्रुतत्रयम् ।
लगौद्रुतलयं लश्च गुरुर्बिन्दुत्रयं भवेत् ॥
लघुर्द्रुतौ लघुश्चेति पौदौ गौ लघुरेव च ।
पगौद्रुतौ लपौ गश्च गारुगिश्च तृतीयक: ॥
अद्रुतालो गुरुरितिज्ञेयं सर्वसुखप्रदम् ।

॥ । ऽ 0 0 0 । ऽ 0 0 0 । ऽ 0 0 0 । 0 0 । ड़े ड़े 0 0 ऽ ऽ । ड़े ऽ 0
0 । ड़े ऽ 0 0̀ 0 0 0̀ 0 0̀ 0 0 0 । । ऽ ॥ इति **वा कनकमेरु:**

अथवाऽणुचतुष्कंस्यात् क्रीडागारुगिरुस्तथा ।

अणुद्रुताश्चचत्वारो दविरामो लघुद्वयम् ॥

गपौ गारुगिलौदश्चह्रस्वोऽणुद्रुतयुग्मकम् ।

दविरामश्चविज्ञेयःस्वर्णमेरुर्निगद्यते ॥

॥ ˘ ˘ ˘ ˘ 0 0̀ 0 0 0 0̀ ˘ ˘ ˘ ˘ 0̀ । । ऽ ऽ

0 0 0 0̀ । 0 । ˘ ˘ ॥ इति **वास्वर्णमेरुः**

च[4]क्रतालेक्रमाद्ज्ञेयं दचतुष्कंगुरुस्तथा ।

प्रतीपब्रह्मतालेतु विद्वद्भिःपरिकीर्तितः ॥

॥ 0 0 0 0 ऽ । 0 0 0 । 0 0 । 0 । ॥ इति **चक्रतालः**

---

4. अस्य पाठान्तरंयथाः—

चक्रताले क्रमाद्ज्ञेयंदचतुष्कंलघुर्भवेत् ।

प्रतीपब्रह्मतालौस्तःविद्वद्भिः परिकीर्तितः ॥

॥ 0 0 0 0 । । 0 0 0 । 0 0 । 0 । ॥ इति **वाचक्रतालः**

अतः परं मातृकान्तरे अधिक पाठो दृश्यते यथा :—

‘ अथ षोडशध्रुवतालाः ’

जयन्तशेखरोत्साहा स्ततो मधुर निर्मलौ ।

कुन्तलः कमलश्चारो नन्दनश्चन्द्रशेखरः ॥

कामोदो विजयाख्यश्च कन्दर्पं जयमङ्गलौ ।

तिलको ललितश्चेति ध्रुवाः षोडश कीर्तिताः ॥

लघुरेको जयन्तस्तु विद्वद्भिः परिकीर्तितः ।

॥ । ॥ इति **जयन्तः**

लघुद्वयं विरामान्तं शेखरः परिकीर्तितः ।

॥ । ៝ ॥ इति **शेखरः**

उत्साहे गुरुलौज्ञेयौ :—

॥ ऽ । । ॥ इति **उत्साहः**

क्रीडाद्वौ मधुरो भवेत् ।

॥ ० ०̀ ० ०̀ ॥ इति **मधुरः**

क्रीडातु निर्मलः प्रोक्तः :—

॥ ० ०̀ ॥ इति **निर्मलः**

कुन्तलेलो विरामवान् ।

॥ ៝ ॥ इति **कुन्तलः**

क्रीडालौ कमले प्रोक्तौ ।

॥ ० ०̀ । ॥ इति **कमलः**

चारुर्निस्सारुको मतः ।

॥ । ៝ ॥ इति **चारुः**

द्रुतस्तु नन्दने प्रोक्तः ।

॥ ० ॥ इति **नन्दनः**

लघू गश्चन्द्रशेखरः ।

॥ । । ऽ ॥ इति **चन्द्रशेखरः**

कामदेलौ गुरुर्ज्ञेयः ।

॥ । । ऽ ॥ इति **कामदः**

विजयेद्रौ लघुः स्मृतः ।

॥ ० ० । ॥ इति **विजयः**

कन्दर्पे लघुरेकः स्यात् ।

॥ । ॥ इति **कन्दर्पः**

क्रीडातुजयमङ्गले ।

॥ ० ० ॥ इति **जयमङ्गलः**

द्रुतस्तु तिलकः प्रोक्तः

॥ ० ॥ इति **तिलकः**

ललिते लौगुरुःस्मृतः

॥ । । ऽ ॥ इति **ललितः**

इति **षोडश ध्रुवतालाः** " इति

[1]अथ द्वात्रिं शन्मंठकाः

नगणोजगणश्चैवलघुर्विजय मंठके ।

॥ ।।।।ऽ।। ॥ इति **विजयमंठकः**

आपो लघुर्द्लयञ्च लघुः सालंगमण्ठकः ।

॥ 0।000। ॥ इति **सालंगमण्ठकः**

गुरुर्द्रुतः प्लुतश्चैव मण्ठः प्रथमसंज्ञकः ।

॥ ऽ 0 ऽे ॥ इति **प्रथममण्ठः**

दद्वयं तगणश्चैव नगणः सारसो मतः ।

॥ 00ऽऽ।।।। ॥ इति **सारसमण्ठः**

---

1. 11499 अंकितमातृकायान्तु मण्ठकजातिताल लक्षणं
' अथषण्मण्ठाः ' इति प्रारभ्यते तद्यथाः—

जयप्रियेतुजगणः

॥।ऽ। ॥ इति **जयप्रियमंठः**

वल्लभे रगणः स्मृतः ।

॥ ऽ।ऽ ॥ इति **वल्लभमण्ठः**

लविरामः कलापेतु ।

॥ ो ॥ इति **कलापमण्ठः**

क्रीडालः कमलः स्मृतः ।

॥ 0ं। ॥ इति **कमलमण्ठः**

षण्मण्ठाः इति प्रतिज्ञातम् । चतुर्णामेवलक्षणं स्वरूपञ्च निरूपितम् ।

द्रुतोलघुर्द्रुतद्वंद्वं लघुद्वंद्वश्चकीलके ।

॥ ०।००।। इति **कीलकमण्ठः**

दीप्तमेकं भवेद्यत्र पडिमण्ठस्सउच्यते ।

॥ ङे ॥ इति **पडिमण्ठः**

रगणोगलसंयुक्तो निश्शब्दं लचतुष्टयम् ॥

रविमंठकसंज्ञोऽयं मात्राद्वादशभिर्युतः* ।

॥ ऽ।ऽऽ।ᒥ ᒥ ᒥ ᒥ ॥ इति **रविमंठः**

विराममंठकेज्ञेयंझंपाता लद्वयंबुधैः ।

॥ ।०ॅ०।०ॅ० ॥ इति **विराममंठः**

धनञ्जयाख्यमंठेतु क्रमाद्दलगपामताः † ।

॥ ०।ऽङे ॥ इति **धनञ्जयमंठः**

लद्वयं दचतुष्कंस्याम् श्रीमंठेगद्वयंतथा ।

॥ ००००ऽऽ इति **श्रीमंठः**

---

* 11499 मातृकायां अधिकपाठः-

नगणोगुरुणैकेन चक्रमंठः प्रकीर्तितः ।

॥ ।।।ऽ॥ इति **चक्रमंठः**

† -do- मंठेजयप्रियेज्ञेयः जगणः केवलः स्वयम् ।

॥ ।ऽ। ॥ इति **जयप्रियमंठः**

गुरुः कूपद्वयं गश्चदौ शरो रङ्गमंठके ।

॥ ऽ ०० ऽ ०० । ॥ इति **रङ्गमंठः**

गुरुद्वंद्वं लघुद्वंद्वं निश्शब्दं लचतुष्टयम् ।

षण्मंठके तु विज्ञेयं रसिकैर्नृत्यवेदिभिः ॥

॥ ऽ ऽ । । ꠲ ꠲ ꠲ ꠲ ॥इति **षण्मंठः**

गीर्वाणमंठके तुस्या ज्जगणो दीप्तकोगुरुः ।

॥ । ऽ । ऊे ऽ ॥ इति **गीर्वाणमंठः**

विचारप्रतिमंठोऽसौ नगणोदौ त्रिरामवान् ।

॥ । । । ० ० ॥ इति **विचारप्रतिमंठः**

भाच्चतुर्लघु निश्शब्दं भवेत्कल्याणमंठके ।

॥ ऽ । । ꠲ ꠲ ꠲ ꠲ ॥ इति **कल्याणमंठः**

शरः कूपद्वयं लौद्रौ नगणस्तगणस्तथा ।

कमलोमंठकोज्ञेयः सर्वशास्त्रेषु संमतः ।

॥ । ० ० । । । । ऽ ऽ । ॥ इति **कमलमं*ठः**

---

* 11499-मातृकायां अस्य पाठान्तरं यथा—

शरः कूपद्वयं लौद्वौद्रुतौद्वौनगणस्तथा ।

॥ । ० ० । । ० ० । । । ॥

वल्लभोरगणेनैव कथितस्तालवेदिभिः ।

॥ ऽ । ऽ ॥ इति **वल्लभमंठः**

साच्चतुर्लघु निश्शब्दं पुनर्भूमंठके भवेत् ।

॥ ।।ऽ ܠ ܠ ܠ ܠ ॥ इति **पुनर्भूमंठः**

कलापमंठकेज्ञेयो नगणश्च विरामवान् ।

द्वितीय स्त्रिपुट श्चैव विलासे मंठके भवेत् ।

॥ ००।ό।। ॥ इति **विलासमंठः**

॥ ।। ৗ ॥ इति **कलापमंठः**

द्रुतोगुरुश्चित्रमंठेकथितस्तालवेदिभिः ।

॥ ०ऽ ॥ इति **चित्रमंठः**

ताराख्य प्रतिमंठोऽसौ दद्वयं लद्वयं तथा ।

॥ ००।। ॥ इति **ताराप्रतिमंठः**

भाच्चतुर्लघु निश्शब्दं भवेन्मुद्रितमंठके ।

॥ ऽ।। ܠ ܠ ܠ ܠ ॥ इति **मुद्रितमंठः**

यगणः सगणोयत्र करालोमंठको भवेत् ।

॥ ऽऽ। ।।ऽ ॥ इति **करालमंठः**

लघुद्वंद्व द्रुतद्वंद्वं लघुर्द्वौ वर्णमंठके ।

॥ । । ० ० । ० ० ॥ इति **वर्णमंठः**

गुरुः प्लुतो भवेद्यत्र गंभीरोमंठको भवेत्* ।

॥ ऽ ऽे ॥ इति **गंभीरमंठः**

द्रुतत्रयं लघुश्चैको द्रुतोलश्चद्रुतोमतः ।

शरद्वयं भवेद्यत्र भिन्नमंठस्स उच्यते ॥

॥ ० ० ० । ० । ० । । ॥ इति **भिन्नमंठः**

कलिङ्गमंठो विज्ञेयो द्रुतो लघुयुगान्वितः ।

॥ ० । । ॥ इति **कलिङ्गमंठः**

आदितालो द्वितीयश्च दद्वयश्च लघुस्ततः ।

यति लम्नद्वयं यत्र द्वितीय युगलं तथा ।

वेद द्रुतास्तु विज्ञेयाः पश्चाच्छरचतुष्टयम् ।

अशब्दश्च क्रमाद् ज्ञेयं संकीर्णमंठकेबुधैः ।

॥ ० ० । ० ० । ० । ० । ० ० । ० ० । ० ० ० ०

॥ इति **संकीर्णमंठः**

---

* अत्र 11499-मातृकायां अधिकपाठः यथा—

सगणो लघु दीप्तौच श्रीरंगे मंठके भवेत् ।

॥ । । ऽ । ऽे ॥ इति **श्रीरंगमंठः**

## इति द्वात्रिंशन्मंठाः

गलौ पपञ्चकञ्चैव दत्रयं विजयो भवेत् ।

॥ ऽ । ङे ङे ङे ङे ङे ० ० ० ॥ इति **विजयतालः***

---

* अतः परं 11499 मातृकायां अधिकपाठः यथाः—

द्रुतौलघुर्मृगाङ्केतु

॥ ० ० । ॥ इति **मृगाङ्कतालः**

उत्सवे लप्लुतद्वयम् ।

॥ । ङे ङे । ॥ इति **उत्सवतालः**

पद्माख्यताले सगणः लघुश्चपरिकीर्तितः ।

॥ । । ऽ । ॥ इति **पद्मतालः**

सुदेववत्सतालेतुलघुर्द्रुतलघुत्रयम् ।

॥ । ० । । । ॥ इति **सुदेववत्सतालः**

तगणो गुरुदीप्तौचमतोरङ्गप्रदीपकः ।

॥ ऽ ऽ । ऽ ङे ॥ इति **रङ्गप्रदीपकः**

दोलौचदत्रयश्चैव लघुःस्याद्रतितालके ।

॥ ० । । ० ० ० । ॥ इति **रतितालः**

गपोदौ गलपाश्चैवराजतालोमतोबुधैः ।

॥ ऽ ङे ० ० ऽ । ङे ॥ इति **राजतालः**

चतुर्द्रुतात्परंगश्च मुकुन्दः परिकीर्तिताः ।

॥ ० ० ० ० ऽ ॥ इति **मुकुंदतालः**

द्रुतौच नगणश्चैवाप्यभङ्गेपरिकीर्तिताः ।

॥ ० ० । । । ॥ इति **अभङ्गतालः**

गलदा राजमार्ताण्डः—

॥ ऽ । ० ॥ इति **राजमार्ताण्डतालः**

गौरीतुलघुपञ्चकम्

॥ । । । । । ॥ गौरीतालः

दचतुर्ष्कं भग्नताले नगणश्चविरामवान्

॥ O O O O । । ॊ ॥ इति **भग्नतालः**

तलौ सरस्वतीकण्ठाभरणे द्रुतयुग्मकम् ।

॥ ऽ ऽ । । O O ॥ इति **सरस्वतीकण्ठाभरणतालः**

सगण: कलकण्ठ:स्यात्

॥ । । ऽ ॥ इति **कलकण्ठतालः**

द्वंद्वेतु सतदीप्तका:—

॥ । । ऽ ऽ ऽ । डे ॥ इति **द्वंद्वतालः**

लौदौलपौचित्रपुट:—

॥ । । O O । डे ॥ इति **चित्रपुटतालः**

गौदौपश्चविलोकिते:—

॥ ऽ ऽ O O डे ॥ इति **विलोकिततालः**

रोदौगुरुद्वयंस्कंदे:—

॥ ऽ । ऽ O O ऽ ऽ ॥ इति **स्कंदतालः**

दत्रयंलौचसारस:—

॥ O O O । । ॥ इति **सारसतालः**

## इति देशीतालप्रकरणम्

Page ( -170): Marga and Desi Talas described

பக்கம் ( -170) மார்க்கதேசீ தாளங்களின் லக்ஷணங்கள்.

अन्येऽपि सन्ति भूयांस स्तालास्ते लक्ष्यवर्त्मनि ।
प्रसिद्धिविधुरत्वेन शास्त्रेऽस्मिन्नप्रदर्शितां: ॥

तद्भेदप्रत्ययार्थन्तु लघूपाया भवन्त्यमी ।
प्रस्तारसंख्या नष्टंचोद्दिष्टं पातालकस्तथा ॥

द्रुतमेरुर्लघोर्मेरुः गुरुमेरुः प्लुतस्यच ।
मेरुश्चेति ततः खण्डप्रस्तारस्तदनन्तरम् ॥

नष्टोद्दिष्टश्चमेरूणांचतुर्णान्तुक्रमेणतु ।
ततो विरामप्रस्तारं नष्टादिः क्रमशः पृथक् ।
लघूपायेन वक्ष्यामः शास्त्रतस्संप्रदायतः ॥

प्रस्तारप्रक्रियाश्चात्र प्रोक्तास्ताः सुमनोहराः ।
ज्ञानाय सुधियां सम्यक् सांप्रतं कथयिष्यते ॥

## अथ प्रस्तारः

लिखित्वेप्सिततालस्य मात्राः पिण्डीकृताः पुनः ।
गुरोरादेरधः कुर्यात् तद्धीनं च परं समम् ॥
ज्येष्ठानुक्रमत स्सम्यक् शेषं लेख्यञ्च वामतः ।

तथा च रत्नाकरः :---

सर्वद्रुतावधिः कार्यः प्रस्तारोयं लघौ गुरौ ।
प्लुतेव्यस्ते समस्ते च न तु व्यस्ते द्रुतेऽस्ति सः ॥

**इति प्रस्तारः ।**

एकद्वित्र्यङ्कदिक्चन्द्रनवषट्सु क्रमादियम् ।
सूचीपरान्तयुग्माङ्क तुर्यषष्ठस्य योगतः ॥
यैरङ्कैरिष्टताळस्य परासूची विधीयते
तैरङ्कैरिहचज्ञेया भेदा दलगपांतगाः ॥ तथाच **रत्नाकरः** ।

एँकाद्यङ्कान्क्रमान्न्यस्य युञ्जीतान्तं पुरातनैः ।

द्वितीय तुर्यषष्ठाङ्कैरभावे तुर्यषष्ठयोः ॥

तृतीय पञ्चमाङ्काभ्यां क्रमात्तयोगमग्रतः

लिखेद्दक्षिण संस्थैवमङ्कश्रेणी विधीयते ॥

साद्याङ्कैरिष्टताळस्थद्रुतसंख्यैःसमाप्यते

द्रुतोलघुःसार्धमात्रो गुरुः सार्धद्विमातृकः ।

प्लुतः सार्धत्रिमालश्चेत्येकैकद्रुतवर्धितैः ॥[1]

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ६ | १० | १९ | ३३ | ६० | १०६ | १९१ |

इति सूची

## अथनष्टम्

अत्रैतावतिथोभेदः किं रूप इति पृच्छति ।

यत्र तन्नष्टमाख्यातं तस्योत्तरमिहोच्यते ॥

भेदानां यावतांमध्ये नष्टप्रश्नः कृतोभवेत् ।

तावत्संख्याकपर्यन्तां लिखेत्सङ्ख्याकसन्ततिम् ॥

अन्त्याङ्केतत्तनष्टाङ्कं पातयेदथ शेषतः ।

पातयेत्पूर्वपूर्वाङ्कं तत्तत्वपतितो द्रुतः ॥

1. सङ्गीतरत्नाकरे इतः परंस्थिताः श्लोकार्धाः यथाः—

तालभेदाः क्रमादङ्कैः संख्यायन्तेक्रमादिह । यदङ्कयोगादन्त्योऽङ्कः लब्ध-स्तैरन्ततः क्रमात् ॥ भेदाद्रुतान्तलध्वन्तगुर्वन्ताश्चप्लुतान्तकाः । संख्यायन्ते इति प्रोक्ताः संख्यानिःशंकपूरिणा ॥

पूर्वश्चेत्पतितो नस्यात् लघुस्तुपतिताद्भवेत् ।
उत्तरेणाकृतार्थेन सहितात्तदसम्भवे ॥

अकृतार्थेन पूर्वेण सान्तरे पतिते पृथक्
लघुर्निरन्तरे तस्मिन् लघुरेव गुरुर्भवेत् ।
गुरुहेतो स्तृतीये तु पतितोगः प्लुतो भवेत् ॥

अङ्काभावे द्रुताद्याह्यास्ताळपूरणहेतवः । **इति नष्टम् ।**

## अथोद्दिष्टम्

ईदृग्रूपोऽत्रकथितो भेदः प्रश्न इतीदृशः ।
उद्दिष्टं तत्र सङ्ख्याङ्कसन्ततिं नष्टवल्लिखेत् ॥
यैरङ्कैः पतितै र्नष्टे लभ्यन्तेये द्रुतादयः ।
तानेवाङ्कान् लभन्ते ते भेदमुद्दिष्टमाश्रिताः ॥
उद्दिष्टे पतितै रङ्कै र्न्यूने संख्याभिधीयते ।
यद्वा षट्प्लुतहेत्वङ्कमध्येऽन्त्यात्प्राचि सप्तमे ॥
तदभावे तु षष्ठाङ्के पातिते ऽन्त्याङ्कमध्यतः ।
यः शेषस्सप्लुताल्लभ्यः लब्धहीनान्त्यशेषतः ॥
ज्ञानं पूरणसंख्याया उद्दिष्टोत्तरमिष्यते ॥ ग्रन्थान्तरे
पृष्टे रूपे लिखेत्सूचीं सम्यगिष्टद्रुतात्मिकाम् ।
लघौ पूर्वां गुरौ मध्ययुग्मांश्शृङ्गिणिचत्रयम् ॥
मेलयित्वाततोहत्वा शेषमङ्कं वदेद्बुधः ।
द्रुतादिज्ञानमङ्कैः स्यात् यैर्नष्टे लिखितैरिह ॥

तानेवाङ्कान् गृहीत्वान्ते दत्वाशेषं वदे द्बुधः ॥ **इत्युद्दिष्टम् ।**

तिर्यग्रेखा त्रयी कार्या ऊर्ध्वगाच यथेच्छया ।
ऊर्ध्वकोष्ठेषु सूच्यङ्कानथ तद्विधिरुच्यते ॥
चतुरङ्गस्य सूचीच प्रान्तमङ्कं ततोर्ध्वकम् ।
मेलयित्वालिखेद्ज्ञानं तत्सूचीवन्मतं बुधैः ॥
तुर्यषष्ठ प्रतिनिधिः नचास्ते किन्त्विह ध्रुवम् ।

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| 1 | 2 | 3 | 6 | 10 | 19 | 33 | 60 | 106 | 191 | 340 | 610 | 1089 |
| 1 | 2 | 5 | 10 | 22 | 44 | 91 | 180 | 358 | 698 | 1360 | 2622 | 5041 |

इति पाताळः ॥

अथ **द्रुतमेरुलक्षणम् ।**

पङ्क्तिकृत्वेष्टताळस्य द्रुतसंमितकोष्ठकाम् ।
तिरश्चींतत्पराऊनांकोष्ठेनाथततः पराः ॥
द्विद्विकोष्ठोनिता स्वस्व पूर्वतोऽथाङ्कयोजना ।
द्वौ द्वौ तासामाद्यकोष्ठौस्यातामेकाङ्कसंयुतौ ।
अधस्तन्या स्तृतीयादौ विषमे कोष्ठकेलिखेत् ॥

अन्त्याद्यङ्कचतुष्कस्य योगं सङ्ख्याङ्कसङ्गवत् ।
समेस्त्वन्त्यं विनैतेषां योगंन्यस्याथ पङ्क्तिषु ॥
परासुशेषकोष्टेषु चतुर्योगोयमिष्यते ।
नास्ति प्रतिनिधित्वासामङ्कयोस्तुर्यषष्ठयोः ।
तासुस्वभावतोयास्यु र्निष्पन्ना ऊर्ध्वपङ्क्तयः ॥

